विवाह वृन्दावन of केशवदैवज्ञ with Commentary विवाह वृन्दावन दीपिका of गणेशदैवज्ञ - Pub. jointly by ज्येष्ठाराम मुकुन्दजी and Lala मेहरचन्द लक्ष्मणदास. Bombay-Lahore, 1953 Vikram era.

(35)

1323



Bill No. 3/07-08
2008-0242
88

श्रीः

# विवाहवृन्दावनम् ।

औदीच्यवंशावतंसपण्डितवरश्रीकेश-
वार्कदैवज्ञविरचितम् ।
सकलागमाचार्यवर्यकेशवसांवत्सरा[illegible]दै-
वज्ञविरचितया विवाहवृन्दावनदीपिकाख्यया
व्याख्यया समन्वितम् ।



तदिदम्

ज्येष्ठाराम मुकुन्दजी,-
लालमेहरचंन्द लक्ष्मणदास
इत्येताभ्यां

मुम्बय्याम्

" श्रीवेङ्कटेश्वर " मुद्रणालये

मुद्रयित्वा प्रकाशितम् ।

शके १८१८ संवत् १९५३.

श्रीः ।

# अथ विवाहवृंदावनस्य-

## अनुक्रमणिका ।

विषयाः — श्लोका० पृष्ठांकाः

### नक्षत्रशुद्धिर्नामाऽध्यायः ॥ १ ॥

## अथ कालमीमांसाऽध्यायः ॥ २ ॥



## अथ मेलकाऽध्यायः ॥ ३ ॥

## अथ नवांशचिन्ताऽध्यायः ॥ ४ ॥

अथ लग्नबलाऽध्यायः ॥ ६ ॥

अथ चन्द्रबलाऽध्यायः ॥ ६ ॥



अथ राहुसत्ताध्यायः ॥ ७ ॥

## अथ षड्वर्गाध्यायः ॥ ८ ॥

अथ गोधूलिकाध्यायः ॥ ९ ॥

अथ ग्रहयोगादिजबलाध्यायः ॥ १३ ॥



अथ मिश्राध्यायः ॥ १४ ॥

## अथ वधूवरप्रश्नाध्यायः ॥ १५ ॥



## अथ स्ववंशवर्णनाध्यायः ॥ १६ ॥

## अथ लग्नशुद्ध्याध्यायः ॥ १७ ॥



इति विवाहवृन्दावनस्यानुक्रमणिका समाप्ता ॥

---


पुस्तक मिलनेका ठिकाना–

ज्येष्ठाराम मुकुन्दजी, कालकादेवीरोड–मुंबई.

मिहिरचन्द लक्ष्मणदास, संस्कृतपुस्तकालय–लाहौर.

श्रीगणेशाय नमः ।

अथ

# विवाहवृंदावनम् ।

## विवाहदीपिका व्याख्यासमेतम् ।

तीर्थानामधिपः कुभृच्छ्रितपदोऽसंत्यक्तवेलास्थिति-
र्यत्पर्याप्तकलद्विजाधिपसमीक्षाप्तोरुमुत्पूरभृत् ॥
लक्ष्मीशोऽखिलदानवारिसततप्रास्निग्धसद्माक्षिति-
र्वौघध्वस्तमलो जयत्युरुकृपासिंधुर्गुरुः केशवः ॥ १ ॥

अथ चतुष्टयवाची॥तत्र प्रथमं गुरुपक्षे।केशवो गुरुर्जयति सर्वोत्कर्षेण वर्तते । गृणात्युपदिशति शास्त्राणीति गुरुः। तमेव सर्वोत्कर्षं द्योतयति तीर्थानामधिप इत्यादिविशेषणैः । 'तीर्थोध्वरे गुरौ मार्गे' इत्यभिधानात् । तीर्थानां गुरूणामधिपः महागुरुरित्यर्थः। तल्लक्षणमाह स्मृतिः " पिता पुत्रमुत्पाद्य संस्कृत्य वेदान्वेदार्थांश्च ग्राहयित्वा वृत्तिं कल्पयति स महागुरुर्भवति"इति।यद्वा तीर्थानां गंगादीनामधिपः"सर्वतीर्थमयो गुरुः"इति स्मृतेः।कुभृच्छितपदः कुभृतो राजानस्तैःश्रितं सेवितं पदं यस्यासौ तथा।असंत्यक्तवेलास्थितिः न संत्यक्ता वेलासु पूर्वाह्णादिकालेषु स्थितिर्विहिताचारो येनासौ ।तथा यत्पर्याप्तकलद्विजाधिपसमीक्षा-

प्तोरुमुत्पूरभृत् । यस्मात्पर्याप्ताः प्राप्ताः कलाः पठनादयो यैस्ते यत्पर्याप्तकलाः ते च ते द्विजाधिपा विप्रश्रेष्ठास्तेषां समीक्षासंदर्शनं तया आप्ता प्राप्ता उरुः अधिका मुद्धर्षः तस्य पूरस्तं बिभर्तीति तथा। लक्ष्मीशः पशुधान्यादिधनवान् । यद्वा लक्ष्मीनाम्नी मम जननी तस्या ईशः पतिः । अखिलदानवारिसततप्रस्निग्धसद्मक्षितिः । अखिलानि अनेकानि च तानि दानानि च तेषां वारि उदकं तेन सततमनवरतं प्रस्निग्धा प्रकर्षेणार्द्रा सद्मक्षितिर्गृहभूमिर्यस्यासौ तथा । घोषध्वस्तमलः घोषेण अध्ययनादिघोषश्रवणेन ध्वस्तो मलः पापं येन स तथा । जनानामिति शेषः । उरुकृपासिंधुः उरुः पृथुर्या कृपा तस्याः सिंधुः कृपासागरः ॥ अथ समुद्रपक्षे कथंभूतः सिंधुः तीर्थानामधिपस्तीर्थराजः । कुभृच्छ्रितपदः कुभृतः पर्वता मैनाकादयः तैः श्रितमाश्रितं पदं स्थानं यस्यासौ तथा । "पदं व्यवसितित्राणस्थानलक्ष्मांघ्रिवस्तुषु" इत्यभिधानात् । असंत्यक्तवेलास्थितिः वेला समुद्रतीरं तस्याः स्थितिर्मर्यादा असंत्यक्ता वेलास्थितिर्येन स तथा । यदित्यव्ययम् । यत् यदाकाले पर्याप्तकलः परिपूर्णकलो द्विजाधिपश्चंद्रस्तस्य समीक्षा समुदयः तेन आप्ता प्राप्ता उरुरधिकतरा मुद्धर्षो येन स तथा। तदा पूरभृज्जल-

पूरभृत्स्यात् । चंद्रोदये हि समुद्रस्य जलभरः । अत्रापि पूर्णचंद्रोदये अधिकपूर इति भावः । लक्ष्मीशः लक्ष्म्याईशः पिता। अखिलदानवारिसततप्रस्निग्धसद्मक्षितिः अखिला दानवारयो देवाः तैः सततं प्रस्निग्धा शोभमाना सद्मक्षितिः स्थानभूमिर्यस्यासौ तथा। यत्स्थाने विष्ण्वादिदेवा निवसंतीत्यर्थः। घोषध्वस्तमलः घोषेण गर्जनेन ध्वस्तः मलः पातकं येन स तथा " सुग्रीव सफलं जन्म ये वसंति महोदधौ ॥ अहर्निशं प्रघोषेण ब्रह्महत्या विलीयते" इति पुराणात् ॥ अथ विष्णुपक्षे केशवो नारायणो जयति । गुरुः उद्धवार्जुनादीनां ज्ञानोपदेष्टा तीर्थानामधिपः गंगादीनां तत्पादजन्यत्वात् कुभृच्छ्रितपदः कुभृद्धरणीधरः शेषः तत्राश्रितं पदं यस्य स तथा शेषशायीत्यर्थः । असंत्यक्तवेलास्थितिः असंत्यक्ता वेलायां समुद्रतीरे द्वारकादौ स्थितिर्निवसतिर्येनासौ तथा । यत्पर्याप्तकलद्विजाधिपसमीक्षाप्तोरुमुत्पूरभृत् यस्मात्पर्याप्ताः शौर्यादिकला येन सः यत्पर्याप्तकलः द्विजाः पक्षिणस्तदधिपो गरुडः यत्पर्याप्तकलश्चासौ द्विजाधिपश्च तस्य समीक्षा संदर्शनं तया आप्ता उरुर्महती मुद्धर्षस्तस्याः पूरस्तं बिभर्तीति तथा । लक्ष्मीशो लक्ष्मीपतिः । अखिल दानवारिसततप्रस्निग्धसद्मक्षितिः दानवारिदंतिनांमद-

जलं तेन सततं प्रस्निग्धा आर्द्रीकृता अखिला स-
मग्रा दानवारिसततप्रस्निग्धा सद्मक्षितिर्गृहांगण-
भूमिर्यस्यासौ तथा कृष्णरामावतारयोः यस्य गृहांगण-
भूमिरेवंविधेति पुराणप्रसिद्धा। घोषध्वस्तमलः घोषा-
णां व्रजस्थितगोपादीनां ध्वस्तः मलो येनासौ तथा
कृष्णावतारे प्रसिद्धमिदम्। उरुकृपासिंधुः महासत्वगुण-
त्वात्॥ अथ सूर्यपक्षे केशवः सूर्यः केशा रश्मयः प्रश-
स्ताः केशा यस्यासौ केशवः "केशाद्वोन्यतरस्याम्" इ-
तिप्रशंसायां मतुबर्थे वः। कथंभूतः केशवः। गुरुः रोमकम-
यासुरादीनां ज्योतिःशास्त्रादिज्ञानोपदेष्टा अतएवती-
र्थानामधिपः तीर्थानां ज्योतिःशास्त्रादीनामधिपः प्रव-
र्तकः 'तीर्थं शास्त्राध्वरक्षेत्रेषु' इत्यभिधानात्। कुभृच्छ्रि-
तपदः कुभृदुदयाचलः तत्र श्रितं पदं येन तथा 'उद-
यशिखरिशृंगस्वर्णसिंहासनस्थ' इत्युक्तः। असंत्यक्त-
वेलास्थितिः वेलाकालः तस्यस्थितिर्वत्सरदिनादि-
नियमः असंत्यक्ता वेलास्थितिर्येनासौ तथा यत्पर्याप्त-
कलंद्विजाधिपसमीक्षा कर्त्री आप्तोरुमुत्पूरभृत्स्या-
त् यस्मात्सूर्यात्पर्याप्ताः प्राप्ताः कला येनासौ यत्पर्या-
प्तकलः सचासौ द्विजाधिपश्चंद्रस्तस्य समीक्षा संदर्शनं
चंद्रस्य प्रतिदिनं कलावृद्धिः क्षयश्च सूर्यकिरणसंसर्गा-
द्भवित इति ग्रहगणिते वासना प्रसिद्धा आप्तास्तद्दर्श

नलालसाः तेषामुरुमुत्पूरः महाहर्षभरस्तं बिभर्ति पुष्णातीति तथा लक्ष्मीशःलक्ष्म्योदीप्तयः तासामीशः अखिलतैजसाधीशः दानवारिसततप्रस्निग्धसद्मक्षितिः अखिलाश्च ते दानवारयश्च इंद्रादिदेवाः तैः सततं प्रस्निग्धाशोभमाना सद्मक्षितिः स्थानभूमिर्यस्यासौ तथा इंद्रादिदेवैः सेवित इति तात्पर्यार्थः । घोषध्वस्तमलः घोषेण नामगर्जनेन ध्वस्तो मलःयेनासौ तथा।उरुकृपासिंधुः महाकृपासागरः स्थावरजंगमजगत इति शेषः। "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"इत्याद्युक्तेः। इत्येते मदुदितश्लोकस्यार्थाः। अथ प्रकृतम् वध्नातिस्म विवाहपूर्वकपदं वृंदावनं केशवादित्यो यत्कुटिलोक्तियुक्तिबहुलं बह्वर्थगूढं पदैः॥ हेलागम्यमनल्पदृष्टसुधियां तन्नेतरेषां तथा तस्माद्वृत्तिविशेषसहितामारब्धुमस्म्युत्सुकः ॥ २ ॥ नानाकलागमपटुर्भुविगीतकीर्तिः श्रीकेशवस्य तनयः कुरुते गणेशः॥ टीकां भ्रमांधतमसापहरां विवाहवृंदावनस्य करपीडनदीपिकाख्याम्॥३॥ व्याख्यामात्रेण तुष्यंतु ये के चोच्चावचा इह॥ मतिमंतस्तु सद्युक्तिविशेषरचनैरपि॥४॥ कृत्वादौग्रहलाघवाख्यकरणं तिथ्यादिसिद्धिद्वयं श्लोकैः श्राद्धविधिं सवासनतया लीलावतीव्याकृतिम् ॥ सप्रक्षेपमुहूर्ततत्वविवृतिं पर्वादिसन्निर्णयं तस्मान्मंगल-

निर्णयाद्यथकृतावैवाहसद्दीपिका ॥ ५ ॥ श्रीभरद्वाजमुनिश्रेष्ठवंशोद्भव औदीच्यज्ञातिमंडनः सकलागमाचार्यवर्योज्योतिर्वित्कुलावतंसो ऽनेककलाकलापचतुरः श्रीदैवज्ञराणगतनयः श्रीकेशवार्कः करणः कंठीरवाद्युक्त्वानिजांसत्कवितावि‍शेषरचनासमेतांवाक्यविचारचातुरीं दर्शयन्सांहितास्कंधैकदेशभूतं विवाहपटलं चिकीर्षुर्जन्मजन्मांतरार्जितदुरितोत्पन्नप्रत्यूहनिरासेन ग्रंथसमाप्त्यर्थं समाप्तेपि ग्रंथे तत्परिचयार्थं शिष्टाचारपरिपालनेन शिष्यशिक्षार्थं च आशीर्लक्षणं मंगलमाचरन्श्रीलक्ष्मीनारायणयोर्विवाहलक्षणं प्रथमसन्निवेशनं वसंततिलकवृत्तेन वर्णयति—

श्रीशार्ङ्गिणोःसृजतु वो नवसन्निवेशः
क्लेशव्ययं चलवलन्नयनांचलश्रीः ॥
यत्रांचलग्रथनमंगलमाचचार श्रृंगार-
हारमणिकौस्तुभरश्मिगुंफः ॥ १ ॥

श्रीशार्ङ्गिणोरिति॥श्रयतेविश्वमेतांसाश्रीःशार्ङ्गंयस्यास्तीति शार्ङ्गी तयोर्लक्ष्मीनारायणयोः स नवसन्निवेशः नवसंगमः"संनिवेशस्तुसंस्थायांप्रवेशेसंगमेपिच" इत्यभिधानात्।वःयुष्माकं क्लेशव्ययंसृजतुकरोत्वित्याशीः। नवसंनिवेशजातिं विशेषणद्वारेणाह। चलवलन्निति। च-

लतस्तौ चलौ वलतस्तौ वलंतौ स्थानांतरगमनं चलनं तस्मात्परावर्तनं वलनं चलाश्च वलंतश्च चलवलंतः नयनानामंचलाः प्रांता नयनांचलाः चलवलंतश्च ते नयनांचलाश्च चलवलन्नयनांचलास्तेषां श्रीः शोभा यस्मिन्नवसंनिवेशे स तथा। समासांतविधेरनित्यत्वात्कप्रत्ययाभावः । सानुरागपरस्परावलोकनेन नयनांचलौ चंचलौ वलंतौ चेति जातिः लज्जाकुलतया नयनांचलाभ्यामेवावलोकनं युक्तं स कः यत्र नवसंनिवेशे शृंगारहारमणिकौस्तुभरश्मिगुंफः अंचलग्रथनमंगलमाचचार आचीर्णवान् । शृंगारस्य हारः शृंगारहारः तस्य मणिः शृंगारहारमणिः स च कौस्तुभश्च शृंगारहारमणिकौस्तुभौ तयो रश्मयस्तेषां गुंफः।गुंफग्रथने। गुंफनं गुंफः ग्रथनामिति यावत् । अंचलयोर्ग्रथनं तदेव मंगलमंचलग्रथनमंगलं श्रियः शृंगारहारमणिः शार्ङ्गिणस्तु कौस्तुभः तद्रश्मीनां परस्परं ग्रथनमंचलग्रंथनभावं प्रापेत्यर्थः। विवाहसमये वधूवरप्रावृतवस्त्रांचलग्रंथनं मंगलत्वेन क्रियत इति शिष्टसमाचारः। सतु प्रागेव शृंगारहारमणिकौस्तुभरश्मिगुंफनेनैव निष्पन्न इतिभावः। अत्र मंगलार्थं गणादिदोषनिरासार्थं वादौ श्रीशब्दप्रयोगः।तदुक्तं"देवतावाचकाःशब्दा ये च भद्रादिवाच-

काः॥तेसर्वे नैव निंद्याः स्युर्लिपितो गणतोऽपि वा" इति। यथा"श्रियः कुरूणामधिपस्य"इत्यादौ ॥ १ ॥

संवर्ग्य गर्गभृगुभागुरिरैभ्यगर्भ्यैः
सारं वराहमिहिरादिमतानुसारम् ॥
स्फारत्स्फुरत्परिमलाढ्यफलं विवाह-
वृंदावनं विरचयामि विचाररम्यम्॥२॥

अथास्य ग्रंथस्य आर्षमूलत्वेन प्रामाण्यं तथा प्राचीनग्रंथेभ्यो वैशिष्ट्यं द्योतयन्संबंधादि-चतुष्टयगर्भं तदारंभहेतुं वसंततिलकयाह ॥ संवर्ग्येति। अहं विवाहवृंदावनंनाम ग्रंथं विरचयामि।अन्वर्थं नाम विवाह इवविवाहः स्त्रीपुरुषसमागमलक्षणः तदर्थं वृंदावनमिव वृंदावनं विवाहवृंदावनं कृष्णो हि तत्र गोपीभिः सह परस्परपाणिधारणपूर्वकरास-क्रीडादिकं कृतवान् अन्येपि शूरसेनसुषेणादयः। वृं-दावनंनाम वनं यमुनातीरे प्रसिद्धम्। यद्वा विवाहानां वृंदं विवाहवृंदं तदवतीति विवाहवृंदावनम्। अत्रहि स-म्यक्सदसत्फलनिरूपणेन असत्समयपरित्यागात्स-मयविवाहकरणेन पुत्राद्यभिवृद्धिद्वारा विवाहावन-त्वं युक्तमस्य ग्रंथस्य।कथंभूतं विवाहवृंदावनं स्फार-त्स्फुरत्परिमलाढ्यफलं स्फारंति तानि स्फारंति विस्तृ-तानि।स्फुर स्फूर्तौ। स्फुरंति तानि स्फुरंति विकसमा

नानि परिगतो मलः परिमलः दोषाभावः"कुगतिप्राद-
यश्च"इति तत्पुरुषः।तेनाढ्यानि परिमलाढ्यानि स्फारं-
तिस्फुरंति परिमलाढ्यानि फलानि नक्षत्रफलादीनि य-
स्मिंस्तथा।पुनः कीदृशं विचाररम्यं नानाविधविरुद्धमु-
निवाक्यानांपूर्वपक्षसिद्धांतरूपसारासारविचारेणरम्यम्
किंकृत्वा गर्गादिगीर्भ्यः सारं संवर्ग्यगर्गादयो यवनसित-
पुलस्त्यादीनामुपलक्षणम् तेषामप्यत्र मतोपन्यासदर्श-
नात्।गर्गादीनां गिरः वचनानि तेभ्यः एकदेशीयादिवा-
क्यपरित्यागेन बहुमतस्वीकारात्मकं सारं संवर्ग्य मेल-
यित्वा।न केवलं समत्वेनैव सारं संवर्गितं किं तु वराहमि-
हिरादिमतानुसारम् । आदिशब्देन लल्लश्रीपतिश्रीधरा-
दीनांग्रहणं वराहमिहिरादीनां मतमनुसरतीति तथा
गर्गादिवाक्यानां सारासारपर्यालोचनया वराहादिमता-
नुसारं विचार्य विरचयामीत्यर्थः । अत्रत्यानां मद्वच-
नानामपि गर्गादिमुनिवाक्यमूलत्वेन प्रामाण्यमि-
तिभावः । स्फारदित्यादिविशेषणद्वयेन पूर्वग्रंथे-
भ्योस्य वैशिष्ट्यं द्योतितम्। अथ संबंधादिचतुष्टयकथ
नमंतरेण शास्त्रारंभवैय्यर्थ्यप्रसंगः । तदुक्तं " सिद्धिः
श्रोतृप्रवृत्तीनां संबंधकथनाद्यतः ॥ तस्मात्सर्वेषु
शास्त्रेषु संबंधः पूर्वमुच्यते ॥ किमेवात्राभिधेयं स्यादि-
ति पृष्टस्तु केनचित् ॥ यदि न प्रोच्यते तस्मै फल

शून्यं तु तद्भवेत् ॥ सर्वस्यैवहि शास्त्रस्य कर्मणो वापि कस्यचित् । यावत्प्रयोजनं नोक्तं तावत्तत्केनगृह्यते॥ "इति एवंवृद्धोपदेशं हृदि मत्वा अनेनैव पद्येन संबधः सूचितः। परिमलाढ्यफलमित्यनेन अभिधेयं सूचितम्।तस्यास्य शास्त्रस्यच प्रातिपाद्यप्रातिपादकत्वेन संबंधो वा। प्रयोजनं तु शुभाशुभफलादेशः। तज्जिज्ञासुरधिकारी । एतदुक्तंभवति चतुराननमुखाद्विनिःसृतस्यास्य शास्त्रस्यनारदवसिष्ठादिमुनिपरंपरयास्मिँल्लोके प्रथितस्य ब्रह्मणा सह संबंधः। उक्तंच नारदेन"अस्य शास्त्रस्य संबंधो वेदांगमिति धातृतः"इति।अस्यशास्त्रस्यवेदांगत्वमिति कृत्वा धातृतः संबंध इत्यन्वयः यद्वा वक्ष्यमाणाभिधेयस्य तत्प्रतिपादकशास्त्रस्य। च प्रतिपाद्यप्रतिपादकत्वेन संबंधः। नक्षत्रशुद्धिकालमीमांसाराशिमेलकनवांशविचारग्रहगुणचंद्रताराबलराहुलत्तातिथ्यादिलग्नशुद्धिगोधूलिकगोचरनिर्णयशुभाशुभयोगभावफलयोगबलसामुद्रिकलक्षणादिमिश्रफलवधूवरप्रश्नादिकप्रतिपाद्यत्वादत्राभिधेयम् । प्रयोजनं तु जन्मजन्मांतरार्जितसदसत्कर्मविपाकरूपशुभाशुभफलसूचकनक्षत्रग्रहक्षलादिना जगतःशुभाशुभनिरूपणंतत्राशुभफलं ग्रहशांत्यादिना ग्रहबलाद्युपेतः सत्समये विवाहादिसं-

पादनेन वासशकुननिमित्तादिना वंचयिष्यत इति कृत्वा तथा तत्प्रतीकारनिरूपणं च । उक्तंचनारदेन "प्रयोजनं तु जगतः शुभाशुभनिरूपणम्॥" इति । तज्जिज्ञासुरधिकारी । सच द्विजएव । न तु शूद्रादिः वेदांगत्वात्।यतो द्विजैरेव सांगोवेदोऽध्येतव्यो ज्ञातव्यश्च। उक्तंच"तस्माद्विजैरध्ययनीयमेव पुण्यं रहस्यं परमं च तत्वम्"इति। अध्यापने तु ब्राह्मणएवाधिकारी क्षत्रियवैश्ययोरध्यापननिषेधात् । महाप्रयोजनं तु वेदांगाध्ययनेन धर्मपरिपालनत्वात् । जगतोऽशुभनिराकरणेन च सुकृतसंचयद्वारा त्रिकालदर्शित्वेन योगितुल्यावस्थांगतस्य योगिवन्निरतिशयानंदावाप्तिलक्षणमोक्षावाप्तिः।उक्तंच श्रीमद्भागवते गर्गं प्रति नंदेन " ज्योतिषामयनं साक्षाद्यत्तज्ज्ञानमतींद्रियम् ॥ प्रणीतं भवता येन पुमान्वेदपरावरम्"इति।सिद्धांतेपि"यो ज्योतिषं वेत्ति नरः स सम्यगूधर्मार्थमोक्षाल्लँभते यशश्च"इति । गर्गोऽपि "ग्रंथतश्चार्थतश्चैतत्कृत्स्नं जानाति यो द्विजः । अग्रभुक्स भवेच्छ्राद्धे पूजितः पंक्तिपावनः ॥ " इति। अत्र सम्यक्पदग्रहणेनासम्यक्छास्त्रं परिज्ञानादयथाशास्त्रम्।- विवाहादिफलादेशकस्य पंक्तिदूषकत्वमस्तीतिगम्यते।यत उक्तं तेनैव।"अविदित्वैव यःशास्त्रं दैवज्ञत्वं प्रपद्यते।सपंक्तिदूषकः पापोज्ञेयो नक्षत्रसूचकः॥ नक्षत्र-

सूचकोद्दिष्टमुपवासं करोति यः।सव्रजत्यंधतामिस्रं सार्द्धमृक्षविटंबिना॥" इति। ऋक्षविटंबिना नक्षत्रसूचकेन। अतश्चायथाशास्त्रमादेशकएवनक्षत्रसूचकःनत्वकृत्स्नशास्त्रपरिज्ञाता दैवज्ञत्वं प्रपद्यत इत्युक्तत्वात् । पूर्वार्जितसदसत्कर्मविपाको दैवमित्युच्यते तज्जानातीति दैवज्ञःतस्यभावो दैवज्ञत्वम् ।बृहस्पतिरपि"दैवज्ञैः शास्त्रतत्वज्ञैर्मुहूर्तोऽन्विष्यते यदि। सन्मुहूर्तः समन्वेष्यो नान्यैर्नक्षत्रसूचकैः॥"इति।अतएवकश्यपेन वेदपारगसाहित्येनैव नक्षत्रसूचकस्य श्राद्धे पूज्यत्वं स्मर्यते " अरिर्विश्रंभहंता चव्यंगो नक्षत्रसूचकः॥काणः कुंठश्च मंदश्च श्वित्री मूर्खः सुवृत्तवान् ॥ सर्वे श्राद्धे नियोक्तव्या मिश्रिता वेदपारगैः ॥ "इति । दोषोपि स्मर्यते " प्रायश्चित्तं चिकित्सां च ज्योतिषं धर्मनिर्णयम् ॥ विना शास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघातकम् ॥ " इति । अतोऽसम्यक्छास्त्रवेदनादयथाशास्त्रं फलादेशको नक्षत्रसूचकः । ननु शास्त्रैकदेशवेत्तेति सिद्धम् । अत एवोक्तं गर्गादिभिः "वनं समाश्रिता येपि निर्ममा निःपरिग्रहाः ॥ अपि ते परिपृच्छंति ज्योतिषां गतिकोविदम् ।मुहूर्ततिथिनक्षत्रमृतवश्चायने तथा ॥ सर्वाण्येवाकुलानि स्युर्न स्यात्सांवत्सरो यदि ॥ नासांवत्सरिके देशे वस्तव्यं भूतिमिच्छता । चक्षुर्भूतो हि यत्रैष पापं तत्र न विद्यते॥ " इत्यादि मुक्तावल्यादि

ष्वपि " दशदिनकृतपापं हंति सिद्धांतवेत्ता त्रिदिनजनितमंहस्तंत्रवेत्ता निहंति॥ करणभगणवेत्ता चैकरात्रोत्थपापं जनयति बहुपापं चैकनक्षत्रसूची" इति।एकः केवलःनक्षत्रसूचकः। अतोस्य शास्त्रस्यैकदेशाध्ययनेपि त्रैवर्णिकस्यैवाधिकारोस्तीति सिद्धम्। तत्राप्यार्यवाक्यानां पाठमात्रेणापि फलमस्ति स्मृत्यादिपठनवदिति ॥ २ ॥

ध्रुवानुराधामृगमूलरेवतीकरंमघास्वातिरदूषणोगणः॥रवेरमीनामकरादिष
ड्गृहीकरग्रहेमंगलकृन्मृगीदृशाम् ॥३॥

अथविवाहासर्वकार्येषुनारदादिभिःप्रथमसुद्दिष्टत्वात्पंचांगशुद्धेः प्राधान्यं तत्रापि प्राधान्यं नक्षत्रशुद्धेः। तथा चाहुः"भावांशशुद्धोदयमप्यशुद्धं भशुद्धिहीनं प्रवदंति संतः। तस्माद्विशेषेण भशुद्धिमादौ विचार्य कार्यं शुभमाहुरार्याः"इति।अतःसैव प्रथममभिधीयते सा तूक्तनक्षत्राणामेव।अतः प्रथमं शुभनक्षत्राण्युक्त्वा तत्प्रसंगेन शुभान्सौरमासांश्चाह वंशस्थवृत्तेन ॥ ध्रुवेति। रोहिणी त्र्युत्तराणि अनुराधादीनि प्रसिद्धानि करो हस्तः तेषां समाहारे एकवद्भावः क्लीबत्वं चामघास्वात्यौ प्रसिद्धे अयमेकादशनक्षत्रात्मको गणः चेद दूषणः वक्ष्यमाणपापवेधादिदोषरहितः तदा मृगीदृशां

स्त्रीणां मृगजातिःस्त्री मृगीतस्या दृगिव दृग्यासां तासां करग्रहे विवाहे मंगलकृत्स्यात् । वक्ष्यति च "स्यूरद दूषणभूषणे"त्यादि क्रूरवेधादिदोषेत्वशुभफलं तत्र तत्र वक्ष्यति।रवेरिति।षण्णांगृहाणांसमाहारः षड्गृही मकर आदिर्यस्याःसा मकरादिःसाचासौषड्गृही च मकरादि षड्गृही अमीना मीनरहिता मकरकुंभमेषवृषमिथुन-स्थोर्कों विवाहे मंगलकृदित्यर्थः।नन्वत्र नक्षत्रग्रहादीनां शुभफलकर्तृत्वं कथं युज्यते प्राचीनसदसत्कर्मविपा-करूपस्य दैवस्यावश्यंभावित्वात्।तथाच शौनकः"येन तुयत्प्राप्तव्यं तस्य विधानं सुरेशसचिवोपि।यः साक्षान्नि-यतिज्ञःसोपि नशक्तोऽन्यथाकर्तुम्॥तद्विज्ञानोपायं लग्न विधानेन संप्रवक्ष्यामि । जन्मन्यथवा प्रश्ने तत्सदृ-शफलं विवाहेपि " इति ॥ अतो यथोक्ता विवाहादि समयादैवपाकज्ञानोपायाःविवाहादिषु यादृशसमयावा-प्तिस्तादृशं दैवमस्तीति ज्ञेयम् ॥ यत उक्तं तेनैव " वरणप्रदानपरिणयशचीप्रपूजाभिषेककरणानि ॥ सुशुभे तिथौ विलग्ने न भवंति किलाल्पपुण्या नाम्" इति ॥ अतो विवाहादिशास्त्रं दैवज्ञापकमेवेति नैवं सद्युक्तं मन्यसे विवाहादिषु विहितशुभकालस्य यंत्रादिना प्रयत्नेन पुरुषसाध्यत्वात् । सत्युभययोगे कर्मसिद्धिर्न केवलं दैवेनेति।तथाच वक्ष्यति" फलेद्यदि प्राक्तनमेव तत्किं कृष्याद्युपायेषु परः प्रयत्नः । श्रुतिः

स्मृतिश्चापि नृणां निषेधविध्यात्मके कर्मणि किं निषण्णे" इति। यदि तु दैवमेव फलेत्तदा सर्वोपि जनः कृष्याद्युपायेषु कथं प्रवर्तते। किंच निषेधविध्यात्मकाः श्रुतिस्मृत्यादयोपि निरर्थकाः स्युः। न वृक्षमारोहेन्न कूपमवेक्षेत न बाहुभ्यां नदीं तरेन्न संशयमभ्यापद्यते" इत्यादीनामाश्वलायनादिकल्पानां "श्रीकामः पुष्टिकामो वा ग्रहयज्ञं समाचरेत्" इत्यादियाज्ञवल्क्यादिवचनानां चिकित्सादिशास्त्रस्य च वैय्यर्थ्यप्रसंगः स्यादित्यर्थः। तथाच याज्ञवल्क्यः " दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता। तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम्" इति। कर्मसिद्धिः फलावाप्तिरिष्टानिष्टप्राप्तिलक्षणा सा च केवलं दैवे न व्यवस्थिता अपि तु पुरुषकारेपि। पुरुषकारः प्रयत्नः। अपिच पुरुषकाराभावे दैवमेव नास्तीत्याह। तत्र दैवमिति। पूर्वदेहार्जितं पौरुषमेव दैवमित्युच्यते तच्च अल्पपुरुषकारादनंतरं महाफलोदयेन अभिव्यक्तम्। अतएवाह वसंतराजः " पूर्वजन्मजनितं पुराविदः कर्म दैवमिति संप्रचक्षते। उद्यमेन तदुपार्जितं तदा वांछितं फलति नैव केवलम्॥" इति। तस्मात्प्रयत्नाभावे दैवं नास्तीत्यतो विवाहादिषु शुभकालावाप्तिलक्षणो यत्नो विधातव्यः। तथाच नारदः "सर्वाश्रमाणामास्थेयं गृहस्थाश्रममुत्तमम्। यतस्तदपि योषायां शीलवत्यां स्थितंततः॥ तस्याः सच्छीललब्धिस्तु सुलग्नवशतः खलु।

पितामहोक्तां संवीक्ष्य लग्नशुद्धिं प्रचक्ष्महे" इति॥अतो दैवयत्नयोरन्यतरेण फलसिद्धिर्न भवतीत्यत्र दृष्टांतमाह याज्ञवल्क्यः"यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत्। तद्वत्पुरुषकारेण विना दैवं न सिद्ध्यति" इति॥अत एव ग्रंथकारोपि वक्ष्यति"प्राक्कर्मबीजं सलिलानलोर्वीसंस्कारवत्कर्मविधीयमानम्।शोषाय पोषाय च तस्य तस्मात्सदा सदाचारवतां नहानिः" इति॥यत्प्राक्कर्म तस्य शोषाय पोषाय च अधुना विधीयमानं कर्म भवति।किंवत्। बीजं सलिलानलोर्वीसंस्कारवत् यथा सद्बीजं शुभैः सलिलादिसंस्कारैःसंस्कृतं सदुदेति वर्धते च तद्वत्प्राक्कर्मापिऐहिकेन सत्प्रयत्नेन वर्धते अन्यथा क्षीयत इत्यर्थः । तस्मात्कारणाच्छास्त्रविहितविवाहादिशुभकालग्रहशांतिचिकित्सादिसदाचारवतां पुरुषाणां सदा न हानिः स्यात् । अपिच।दैवं किल पुरुषनिष्ठं तद्देशकालवशत एव विपच्यते दुष्टमपि दुष्टांतरसाहित्येनैव दुष्टकारि यथा दुर्जनो रंध्रान्वेषणेन।अतएवोक्तं श्रीपतिना "अकालचर्या मृगया च साहसं सुदूरयानं गजवाजिवाहनम्॥गृहे परेषां गमनं च वर्जयेद्ग्रहेषु राजा विषमास्थितेष्विह" इति।वंसतराजोपि"नैतदेवमिह येन देहिनां पूर्वकर्म विहितं कुतोऽपिहि । देशकालवशतो विपच्यते युज्यते व्यवहितं कथं तु तत्" इति।एतदेवं प्रमाण्य शेषं स्पष्टम्।अतश्च दुष्टमपि दैवफलं विवाहादिसत्समयावा-

त्तिरूपयत्नेन निवर्त्यंत एव। यथाह स एव "सर्पवह्निविष कंटकादिकं येन दैवशरणोपि मानवः। दूरतस्त्यजति पौरुषं सदा तेन न स्फुरति दैवतोऽधिकम्॥ पौरुषेण हृदयेप्सितां गतिं प्राप्नुवंति पुरुषाः सुमेधसः। यांति दैवशरणालयं यथा पादयोर्ज्वलति दावपावके" इति॥ अतः शकुनगोचरादिना आवेदितमशुभं दैवफलं शुभेन प्रयत्नेन संतो वंचयंत्येव। तथा च सएवाह "तन्निरूप्य शकुनेन दुःखदं वंचयंति नियतं समुद्यतम्। पौरुषेण पुरुषाः सुमेधसः संश्रयंति पुनरात्मनो हितम्" इति॥ तद्दैवफलं दुःखदं समुद्यतं शकुनेन निरूप्य पुरुषाः पौरुषेण वंचयंतीत्यन्वयः। अथानंतरोक्तैः सर्पवह्न्यादिदृष्टांतैः पौरुषमेव फलसाधनं कथं न स्यात्। उच्यते। समानभूमिषु समानसलिलादिसंस्कारेऽपि फलवैचित्र्यदर्शनात्कारणांतरं कल्प्यते। तदेव दैवमिति। अत उभययोगे सत्येव फलसिद्धिरिति अथ केचिद्बुद्धिःकर्मानुसारिणीति मन्यमानाः प्रयत्नोपि दैवानुरूप इति कृत्वा दैवमेव फलसिद्धेःकारणमिति मन्यंते। तन्न चतुरस्रम् अनवस्थादोषप्रसंगात्। तथा हि। प्राक्कर्मार्जितपौरुषमेव किल दैवमुच्यते। अत्रत्यः प्रयत्नः प्राचीनपौरुष लक्षणेन दैवेन जन्यःतदपि पौरुं तत्प्राचीनपौरुषजन्यं तदपि तत्प्राचीनपौरुषजन्यमित्यनवस्था अतः प्रयत्नोपि दैवप्रेरितइत्ययमप-

न्नं।नैतन्मन्यामहे।न खल्विदमनवस्थादूषणम्। अनादि-संसारे बीजांकुरन्यायदृष्टांतसद्भावात् । न चैतद्युक्तम्। नहि बीजांकुरन्यायाद्दैवमेव मूलमिति निश्चीयते । नापि प्रयत्नः। अतः सत्युभययोगे फलसिद्धिरिति मतं चतुरस्रम् ।एवं चेत्तर्हि शौनकोक्तवाक्यानां पूर्वोक्तानां का संगतिः । उच्यते। दैवं तु दृढकर्मरूपमदृष्टकर्मरूपं चेति द्विविधम् ।तत्र दृढकर्मरूपस्यावश्यंभावित्वाद्ग्रहशांत्यादिरूपेण संपूर्णप्रयत्नेनापि तन्निवारयितुं न शक्यते । दृढमूलत्वात् । खरतरवाताघातेपि दृढमूलपादपवत् । अदृढकर्मरूपं तु प्रयत्नेन निवार्यते प्रशिथिलमूलपादपवत्। तथाच जातके ।"ये धर्मकर्मनिरता"इत्यादि । प्रयत्नाभावे तु विपच्यत इव । तथाच तत्रैव"पापिष्ठा ये दुराचारा देवब्राह्मणनिंदकाः। अपथ्यभोजिनस्तेषामकालमरणं ध्रुवम् "इति ॥ अत एव चिकित्साशास्त्रेपि"पूर्वजन्मकृतं पापं व्याधिरूपेण बाध्यते " इति ॥ सर्वव्याधीनां साधारण्येन कर्मजन्यत्वेपि साध्यासाध्यत्वेन द्वैविध्यमस्ति । तत्रापि " कृच्छ्रोपायः सुखोपायो द्विविधः साध्य उच्यते । असाध्यो द्विविधो ज्ञेयोऽसाध्यो यश्चाप्रतिक्रियः ॥ साध्योऽसाध्यत्वमायाति साध्यश्चासाध्यतां तथा। घ्नंति प्राणानसाध्यास्तु नराणामक्रियावताम्"इत्यादिना अचिकित्सितव्याधेर्दृढकर्ममूलत्वमन्येषाम-

दृढकर्ममूलत्वं निश्चीयते । अतो दैवस्येदृशं द्वैविध्यमस्ति । अतः शौनकादिवाक्यानां पूर्वपक्षरचितानामयमर्थः ॥ येन त्विति । येन- पुरुषेण यत्प्राप्तव्यमवश्यं भोक्तव्यं दृढकर्मोपार्जितमिति यावत् । तद्बृहस्पतिरप्यन्यथाकर्तुं न शक्तः । अर्थादन्यददृढकर्मोपार्जितमन्यथा कर्तुं शक्त इत्यर्थः । वरणप्रदानेति । तद्विज्ञानोपायमिति । अत्रायं भावः । यस्य परिणयनादिकाले दुष्टबृहस्पतिचंद्रादौ दृष्टे सति तद्दैवपाकस्य तादृशमशुभफलमिति ज्ञातम् । उक्तं च विवाहपटलांते तेनैव " एवं बुद्ध्वा मतिमान् भविष्यफलमादिशेत्समुद्वाहे " इति । अतो बौधायनादिविहितेन तच्छांतिरूपेण धर्मेण प्रयत्नात्मकेन तन्निवर्त्यते ।"धर्मेण पापमपनुदति"इतिश्रुतेः । शुभकालेन तु अशुभदैवफलं निवर्त्यते शुभं तु वर्द्धते । अत एव तत्रैव तेनैवोक्तं"सुपरीक्षितं विलग्नं धर्मार्थसुखाय भवति दंपत्योः । तद्विपरीतं निमेषादनागतातीतकालेन ॥ अपरीक्षितं विलग्नं नहि देयं पंडितेन दैवविदा। अयशोंबुनिधौ मज्जति शास्त्रमविज्ञाय यो दद्यात्"इति ॥ बृहस्पतिरप्याह । "स्वभावादेव कालोयं शुभाशुभसमन्वितः। अनादिनिधनः सर्वो न निर्दोषोननिर्गुणः॥ तस्मान्निर्दोषकालार्थं मुहूर्तमधिगच्छताम॥ कालः शुभो गुणैर्युक्तो बलवद्भिः शुभप्रदः ।दोषैर्युक्तोपि च प्रा-

णैर्बहुभिर्व्यत्ययं द्वयोः'' इति। अतः शुभकालबलेन पूर्वकर्मोपार्जितमशुभमपि निवर्त्यत इति सर्वमनवद्यम्॥ अतो नक्षत्रादीनां कालावयवत्वात्सर्वकर्मसु शुभाशुभफलदातृत्वमस्तीति सिद्धम् ॥ ३ ॥

प्राचेतसः प्राह शुभं भगर्क्षं सीता त-
दूढा न सुखं सिषेवे ॥ पुष्यस्तु पुष्य-
त्यतिकाममेव प्रजापतेराप स शाप-
मस्मात् ॥ ४ ॥

अथ पूर्वाफल्गुनीपुष्यौ कैश्चिदुक्तौ तन्मतनिरासार्थमाह । इंद्रवज्रोपेंद्रवज्रामिश्रणात्मिकोपजातिकेयम् । प्राचेतस इति । प्रकृष्टं चेतो यस्यासौ प्रचेताः तस्यापत्यं प्राचेतसो मुनिविशेषः स भगर्क्षं पूर्वाफल्गुनीनक्षत्रं शिवं शुभमस्मिन्विवाहे यत्प्राह तस्मिन्नक्षत्रे ऊढा परिणीता सीता सुखं न सिषेवे न सेवितवती। वनवासरक्षोहरणादिकं दुःखमेवाप । अतो गर्गशौनकनारदादिभिर्नोक्तमिति कृत्वा तन्नादरणीयमिति भावः । ननु विवाहे भगर्क्षविधायकस्य मुनिवचनस्य कथमयं प्रत्यक्षबाधः। उच्यते। तस्य सीताविवाहात्प्राग्युगविशेषविषयत्वादिति योजनीयम् । पुष्यस्तु अतिकामं पुष्यति वर्द्धयाति एवं कारणादस्मिन्विवाहविषये स पुष्यः प्रजापतेर्ब्रह्मणः सकाशाच्छापमाप प्राप्त-

वान् । पुष्णाति कार्याणीति पुष्यः । क्यबंतो निपातः । ब्रह्मणः किल विवाहः पुष्येभूत् । अनंतरं शंभुविवाहसमये पार्वतीसौंदर्यदर्शनात्प्रचलितचेतसो ब्रह्मणः परिहितवस्त्रांतश्च्युतवीर्यस्य हस्तद्वयेन परामृष्टस्य तंतुमध्यास्थितकणसहस्रेभ्यो निष्पन्ना अंगुष्ठप्रमाणाः षष्टिसहस्रमिता वालखिल्यानाम मुनयोभूवन्निति ब्रह्मपुराणादौ प्रसिद्धं ततोनुतप्तो ब्रह्मा ज्ञानदृष्ट्या सम्यगवलोक्य पुष्यकृतविवाहनिमित्तमिदमिति कामोद्रेकरूपं वैकृतमिति निश्चित्य विवाहविषये पुष्यं शप्तवानिति कृत्वा गर्गादिभिःस निषिद्ध इति भावः ॥ तथाच शौनकः "अब्दचतुष्कात्कन्या गुरुकुलविद्वेषिणी भवतिपुष्ये। कृपणा पतिसंत्यक्ता वैधव्यं वा समाप्नोति"इति॥अन्योपि 'ग्रहेण विद्धोप्यशुभान्वितोपी'ति ॥ ४ ॥

प्रावृड्वसंतोर्जसहःकरग्रहः परैरुदाहारि न हारि तन्मतम्॥रवेरवैसारिणमुत्तरायणं पुरंध्रिपाणिग्रहणे परायणम् ॥ ५ ॥

अथ विवाहे प्रावृट्कालादिकं कैश्चिदुक्तं तन्मतं निरस्यति॥इंद्रवंशावंशस्थमिश्रणात्मिकोपजातिका॥ प्रावृड्वर्षा वसंतःप्रसिद्ध ऊर्जः कार्तिकः सहा मार्गशी-

र्षः तेषु करग्रहः परैरन्यैर्वात्स्यपराशरादिभिः उदाहारि उदाहृतः । तन्मतं हारि न हरतीति हारि मनोहारि न चार्वित्यर्थः । तत्र हेतुमाह। रवेरिति। यतो रवेरुत्तरायणं मकरादिषट्कमवैसारिणं मीनरहितम् 'मीनो वैसारिणोण्डजः' इत्यभिधानात्। पुरंध्रीणां स्त्रीणां पाणिग्रहणे परायणमतिश्रेष्ठम्।अमीनोत्तरायणस्य गर्गादिबहुसंमतत्वाद्दक्षिणांतःपातिनां प्रावृडादीनां ग्रहणमेकदेशीयमतो नादरणीयमिति भावः। तथाच ज्योतिःसारे"वात्स्यो वर्षमनूनमिच्छति तथा रैभ्योयनं चोत्तरं स्त्रीनामानमृतुं विहाय मुनयो मांडव्यशिष्या जगुः॥ चैत्रं प्रोज्झ्य पराशरः परिणये पौषं च दौर्भाग्यदं त्वाषाढादिचतुष्टयं न शुभदं कैश्चित्प्रदिष्टं बुधैः"इति स्त्रीनामा ऋतुः प्रावृट्शरच्च । शौनकस्तु वर्णविशेषेण ऋतुविशेषमाह " परिणयकालः शुभदः शरदि वसंते च विप्राणाम् । राजन्यवैश्ययोरपि शुभदोग्रीष्मः समुद्दिष्टः ॥ घनसमये शूद्राणां शिशिरे चान्यत्र संकरभवानाम् ॥ "इति । नारदस्तु "अप्रबुद्धो हृषीकेशो यावत्तावन्न मंगलम्"इति शुक्लैकादश्युत्तरं कार्तिकं मार्गशीर्षं च विधत्ते । अन्येपि 'नाषाढप्रभृतिचतुष्टये विवाहः'इत्यादिना तौ विदधते। शौनकस्तु तौ निषेधति "कुलटा वै कार्तिके मासि।सौम्ये परवेश्मरता कलहपरा दुःखसंतप्ता"इति॥शार्ङ्गधरादिभिस्तु तौ मध्यमावु–

क्तौ।एवं सति देशाचारतोत्र व्यवस्था ज्ञेया 'देशे देशे या स्थितिः सैव कार्या'इति वराहोक्तत्वात् । दाक्षिणात्या हि मार्गशीर्षे विवाहं कुर्वन्ति केचिद्गुर्जराः कार्तिकेपीत्यादि । अतो ग्रंथकृता स्वदेशाभिप्रायेणेदमुक्तमिति सर्वमनवद्यम् ॥ ५ ॥

याम्योत्तराः प्रागपराश्च पंच द्वे द्वे च रेखे रचयेद्विदिक्षु ॥ विदिग्द्वितीयार्गलिताग्नितारः सहाभिजित्तत्र भवेद्भवर्गः ॥ ६ ॥

अथ नक्षत्रदोषान्विवक्षुर्वेधदोषस्य महादोषांतःपातित्वेन प्राधान्यात्तमुपजातिकाद्वयेन तावदाह ॥ याम्योत्तराः प्रागपराश्च पंच रेखा रचयेत्।विदिक्षु कोणेषु द्वे द्वे रेखे रचयेत् ।इदं पंचशलाकाख्यचक्रं तत्र चक्रे सहाभिजिद्विदिग्द्वितीयार्गलिताग्नितारः भवर्गः भवेत् । अभिजिता सह वर्ततेऽसौ सहाभिजित् "तेन सहेति तुल्ययोगे"इति बहुव्रीहिः।तत्र सहस्यसादेशस्य वैकल्पिकत्वम् विदिशि द्वितीया या रेखा तयार्गलिता संबद्धा अग्नितारा कृत्तिका यस्य स तथा कोणस्थद्वितीयरेखातः कृत्तिकादीनि साभिजिन्ति नक्षत्राणि सव्येन मार्गेण अपसव्येन वा न्यसेदित्यर्थः। अपसव्यमार्गस्य शिष्टगर्हितत्वात्सव्यमार्गोत्र श्रेयान् ॥ ६ ॥

तस्मिन्नभिन्नाग्रगतं भिनत्ति ग्रहो विवाहर्क्षमशेषमेव ॥ स्त्रीपुंसयोरायुरसौम्यवेधः सौम्यव्यधो हन्ति सुखानि शश्वत् ॥ ७ ॥

तस्मिंश्चक्रे अभिन्नाग्रगतं विवाहर्क्षमशेषं समस्तमेव ग्रहो भिनत्ति। यस्यां रेखायां ग्रहस्तदग्रस्थनक्षत्रं वेधयतीत्यर्थः । विवाहग्रहणं विवाहकृत्योपलक्षणम् । यथाह श्रीपतिः " वधूप्रवेशे दाने च चरणे पाणिपीडने । वेधः पंचशलाकाख्येन्यत्र सप्तशलाकके ॥" इति। अशेषग्रहणं चरणवेधनिरासार्थं तद्विषयं वक्ष्यति। वेधफलमाह । स्त्रीपुंसयोरिति असौम्यवेधः पापग्रहवेधः स्त्रीपुंसयोरायुर्हंति स्त्री च पुमांश्च स्त्रीपुंसौ।अचतुरादित्वात्साधुः । सौम्यव्यधःसौम्यग्रहवेधः शश्वदनवरतम् सुखानि हंति ॥ ७॥

वैश्वदैवतचतुर्लवः श्रवः पंचभूलव इहाभिजिन्मितिः॥ अन्यतः परिणयादयं व्यधः सप्तरेखवलये विलोक्यते ८

अत्र सहाभिजिदित्युक्तम् । अतोभिजित्प्रमाणं तथा विवाहकृत्यादन्यत्र सप्तरेखाचक्रे वेध इत्याह । रथोद्धता । वैश्वदैवतेति। वैश्वदैवतमुत्तराषाढा तस्य चतुर्लवश्चतुर्थांशः अंतिमः श्र

वः श्रवणस्तस्य पंचभूलवः पंचदशांश आदिमः इयमिह वेधादिविषये अभिजिन्मितिः स्यात् । अयमनंतरोक्तो व्यधो वेधः विवाहात्कन्यावरणादिविवाहकृत्यादन्यतः अन्यत्र सर्वत्र व्रतबंधवास्तुयात्रादिषु सप्तरेखवलये सप्तरेखचक्रे विलोक्यते।तथाच श्रीपतिः"वधूप्रवेशे दाने च"इत्यादि । अत्र विवाहपटले अन्यकृत्योपयोगेवेधनिरूपणाद्वेधादयः सर्वे वक्ष्यमाणा दोषाः साधारण्येन सर्वशुभकृत्येषु ज्ञातव्या इति सूचितम् । तथाच वक्ष्यति " तदखिलेपि खलं शुभकर्मणि " इति ॥ ८ ॥

स किल वेधविधिर्द्वितृतीययोश्चरणयोर्मिथआदिचतुर्थयोः ॥ अशुभविद्धमशेषमुडु त्यजेच्चरणगं शुभवेधमसंपदि ॥ ९ ॥

अथ पादवेधं तद्विषयं चाह । द्रुतविलंबितम् । सोनंतरोक्तो वेधविधिर्द्वितृतीययोश्चरणयोस्तथा आदिचतुर्थयोश्चरणयोर्मिथः परस्परं स्यात् । द्वौ च त्रयश्च तेषां पूरणौ द्वितृतीयौ तयोर्द्वितीयतृतीययोरित्यर्थः । आदिश्च चत्वारश्च आदिचत्वारः तेषां पूरणौ आदिमचतुर्थयोरित्यर्थः । प्रथमचरणास्थिते ग्रहे विद्धनक्षत्रस्य चतुर्थचरणो विद्धश्चतुर्थस्थे प्रथम इत्यर्थः । एवं द्वितीयतृतीयावपि । किलेति प्रसिद्धार्थे ।

न्यासक्रमेण प्रथमादिचरणस्थिते ग्रहे तद्रेखाग्रनक्षत्रचतुर्थतृतीयप्रथमाश्चरणाः क्रमेण विद्धाः स्युरिति प्रसिद्धम्। पादवेधविषयमाह। अशुभेति॥ अशुभविद्धं पापग्रहविद्धमुडुनक्षत्रमशेषं समस्तं त्यजेत्। शुभस्य शुभग्रहस्य वेधं चरणस्थितमसंपादि असंपत्तौ अन्यनक्षत्रालाभे सति त्यजेत्। अर्थादन्यनक्षत्रसंभवे सति शुभविद्धमपि नक्षत्रमशेषमेव त्यजेदिति। तथा च श्रीपतिः "ऋक्षं सौम्यग्रहैर्विद्धं पादमात्रं परित्यजेत्। क्रूरैस्तु सकलं त्याज्यमितिवेधविनिश्चयः"इति। यत्तु "क्रूरैरपि त्यजेत्पादं केचिदूचुर्मनीषिणः" इति केषांचिन्मतं तन्नारदादिबहुमतविरोधान्नादरणीयमिति भावः॥ ९॥

यदशुभैर्गतगम्यमधिष्ठितं यदपि च त्रिविधाद्भुतदूषितम्॥ तरणितारकतोपि चतुर्दशं तदखिलेपि खलं शुभकर्मणि॥ १०॥

एवं वेधदोषं निरूप्य दोषांतराण्याह। द्रुतविलंवितम्॥ सादिति॥ यन्नक्षत्रमशुभैः पापग्रहैर्गतगम्यमधिष्ठितं च अशुभश्च अशुभौच अशुभाश्च अशुभाः। द्वंद्वैकशेषः। एकेन अशुभेन द्वाभ्यां त्रिभिर्वा गतं भुक्तं गम्यं भोग्यमधिष्ठितं युक्तं यदपि च नक्षत्रं त्रिवि-

धैर्भौमांतरिक्षैरद्भुतैः दूषितं दिव्याद्भुतानि ग्रहर्क्षजनितानि प्रत्यर्कादीनि भौमानि भूकंपादीनि आंतरिक्षाणि उल्कादीनि एषामन्यतममद्भुतं यस्मिन्दिननक्षत्रे जातं यदपि च तरणितारकतः सूर्याधिष्ठितनक्षत्राच्चतुर्दशं संध्योदितामित्यर्थः। तरणेस्तारकं नक्षत्रं तरणितारकम् " कनीनिकायां नक्षत्रे तारकं तारकेति च" इति विश्वः। कनीनिका नेत्रतारा तन्नक्षत्रमखिलेऽपि शुभकर्मणि विवाहव्रतबंधयात्रादौ खलं पापं स्यादिति प्रत्येकं संबध्यते ॥ १० ॥

रविनखैर्मितमर्कविधुंतुदौ मुनिभिरिंदुरखंडलमंडलः॥हुतवहाकृतिपङ्क्जिनदंतिभिः क्षितिसुतादभिलत्तयति ग्रहः ॥ ११ ॥

अथ लत्तादोषमाह । द्रुतविलंबितम् । अर्कः सूर्यः विधुं तुदति व्यथयतीति विधुंतुदो राहुः तौ रविनखैर्मितं स्वाधिष्ठितनक्षत्रात्क्रमेण द्वादशविंशतितममभिसंमुखं लत्तयतः खंडमेव खंडलं" खंडलं भागश्छेदश्च " इति क्षीरस्वामी। न खंडलमखंडलं तन्मंडलं यस्यासौ तथा संपूर्णमण्डलश्चंद्रः मुनिभिः सप्तभिर्मितमभिलत्तयति। एतदुक्तं भवति । संपूर्णमंडलश्चंद्रः किल पूर्णिमांते भवति तत्र यन्नक्षत्रं तस्मात्सप्तमचंद्रोऽ-

भिलक्षयति । तच्च कृष्णषष्ठ्यासन्नं सदा स्यादिति । हुतवहास्त्रयः आकृतिर्द्वाविंशतिः षट्प्रसिद्धाः जिना-श्चतुर्विंशतिः दंतिनोष्टौ तैस्तुल्यं नक्षत्रं स्वाधिष्ठितन-क्षत्रात्क्रमेण क्षितिसुताद्भौममारभ्य ग्रहः अभिसंमुखं लक्षयति।भौमादयः क्रमेण त्र्यादीनि लक्षयन्तीत्यर्थः। अत्र सर्वेषां संमुखलक्षनमेवोक्तम् ॥ ११ ॥

इति सति द्युसदामभिलक्षने यदनु-
लक्षनमुक्तमृषिव्रजैः ॥ तदुडुपश्चिम-
पूर्वविभागयोरनधिकाधिकदोषवि-
वक्षया ॥ १२ ॥

पूर्वैस्तु चतुर्णां पृष्ठलक्षनं चतुर्णामभिलक्षनं कथमु-क्तम् । तत्र हेतुमाह ॥ द्रुतविलंबितम् । इतीति । इत्ये वंविधे द्युसदांग्रहाणामभिलक्षनेसंमुखलक्षनेसतियद-नुलक्षनमृषिव्रजैर्मुनिसंघैरुक्तम् । ऋजुमार्गेण सिध्यतो-र्थस्य वक्रेण साधनायोगादिति न्याये सत्यपि तदु-डुपश्चिमपूर्वविभागयोर्नक्षत्रोत्तरपूर्वार्धयोर्न्यूनाधिकदो-षविवक्षया हेतुना उक्तम् ॥ एतदुक्तं भवति ॥ ग्रहनक्षत्राणि प्राङ्मुखानि संति तत्र पुरः प्रेरिता लत्ता अग्रस्थस्य पृष्ठे लगति पश्चात्प्रेरिता अग्रभागे । अतः अग्रलत्तया लातितनक्षत्रस्य पूर्वार्धे अधिकदोषः उत्त-

रार्द्धे न्यूनः। पृष्ठलत्तया तु पूर्वार्द्धे अल्पः।उत्तरार्धे अधिकः स्यादिति। अनेन हेतुना पृष्ठलत्तनं महर्षिभिरुक्तमित्यर्थः। ग्रंथकृता तु लत्तितनक्षत्रस्य अखिलस्यापिनिषिद्धत्वादभिलत्तनमेवोक्तम् ॥ १२ ॥

उडुनि निर्दलिते शुभलत्तया न फलमस्ति बलस्य गलत्तया ॥ अशुभलत्तितमत्ति तदूढयोर्धनसुतानसुतापकरं परम् ॥१३ ॥

अथ लत्तायाः फलमाह।द्रुतविलंबितम्।उडुनि नक्षत्रे शुभग्रहलत्तया निर्दलिते सति तस्य नक्षत्रस्य यद्विहितं शुभफलं तन्नास्ति। कया हेतुभूतया बलस्य गलत्तया गलतीति गलत्तस्य भावो गलत्ता तया निर्बलत्वेनेत्यर्थः। अशुभग्रहेण लत्तितं यद्भं नक्षत्रं तत्र ऊढयोः परिणीतयोर्दंपत्योः परमत्यर्थमसुतापकरं प्राणतापदं सत् धनसुतानत्ति खादयति अशुभलत्तितनक्षत्रे उद्वाहितयोः प्राणतापो धनसुताश्च नश्यंतीत्यर्थः ॥ १३ ॥

विद्धा त्रयोदशभिरूर्ध्वगतैकरेखा खार्जूरिकं तदिह शीर्षभतो भचक्रे ॥ न्यस्तेसहाभिजिति तारकराजभा-

न्वोस्तुल्यर्क्षगम्यगतयोर्नयनार्गले-
यम् ॥ १४ ॥

अथैकार्गलदोषमाह।वसंततिलका। ऊर्ध्वगता एका रेखा तिर्यक् स्थिताभिस्त्रयोदशरेखाभिर्विद्धासती खार्जूरिकं नाम चक्रं स्यात् । इहास्मिंश्चक्रे वक्ष्यमाण शीर्षनक्षत्रमारभ्य सहाभिजिति भचक्रे न्यस्ते सति सह अभिजिता वर्तमानं तत्तथा।बहुव्रीहिः प्राग्वत् । तारकराजभान्वोश्चंद्रसूर्ययोः'कनीनिकायां नक्षत्रे तारकं तारकेति च ' इति विश्वः। तारकाणां राजा तारकराजः । यद्वा "ङ्याापोःसंज्ञाच्छन्दसोर्बहुलम्" इति ह्रस्वः । स्वनक्षत्रस्थितयोश्चंद्रार्कयोरेकरेखागतयोरियं नयनार्गला स्यात् । परस्परदृष्टिपातलक्षण एकार्गलः स्यादित्यर्थः।कथंभूतयोः तुल्यर्क्षगम्यगतयोः ऋक्षयोर्गम्यगते ऋक्षगम्यगते तुल्ये ऋक्षगम्यगते ययोस्तौ तथा।एकतरस्य यावति नक्षत्रगते तावति अन्यस्य गम्ये सतीत्यर्थः।अनेन पादवेधः सूचितः । तद्यथा ।प्रमथचतुर्थचरणयोरन्योन्यं किल वेधः तत्रैकतरस्य प्रथमचरणस्थस्य पादमात्रं गतमन्यस्य चतुर्थचरणस्य पादमात्रं गम्यं स्यात्। एवं द्वितीयतृतीययोरपि । तथाच नारदेन महादोषेषु पठितम्"खार्जूरिकसमांघ्रिभम्" इति॥१४

शीर्षभं भवति रूपसंयुता दुष्टयोगमितिरर्धिता सती ॥ शेषिणी यदि च सार्द्धविश्वयुङ्मङ्गलं गलति सार्गले विधौ ॥ १५ ॥

अत्र शीर्षभतो न्यास उक्तस्तच्छीर्षभं तथैकार्गलं फलं चाह । रथोद्धता । दुष्टयोगे सति तस्य दुष्टयोगस्य मितिः रूपसंयुता त्र्यर्धिता सती शीर्षभं भवति । शेषमस्याः सा शेषिणी यदि सा शेषिणी भवति तदा सार्धविश्व १३ । ३० युक्छीर्षभं स्यात् । दुष्टयोगाः व्याघातशूलपरिघव्यतिपातविष्कंभगंडातिगंडवज्रवैधृताः तत्र व्याघातसंख्या १३ रूपसंयुता १४अर्धिताजातं ७ शीर्षभम्।एवं शूलादिषु।तथा गंडो दुष्टयोगस्तस्य संख्या १० रूपसंयुता ११ अर्धिता ५ । ३० इयं शेषिणी जाता अतः सार्धत्रयोदशयुता १९ जातं शीर्षभं मूलः एवमतिगंडेपि १७ मंगलमिति । सार्गले विधौ सति मंगलं गलति । अर्गलया वर्तमानः सार्गलः एकार्गलस्तयोश्चंद्रार्कयोः सतोर्मंगलं नश्यतीत्यर्थः ॥ १५ ॥

त्यक्त्वा गतैष्यस्य परे तु हेतुमुज्झंति नक्षत्रमशेषमेव॥एकार्गलस्यैव हि सा च भंगी संध्यागतं यद्गलहस्तयांति॥१६॥

अत्रैकार्गलविषये परमतमाह।इंद्रवज्रा।त्यक्त्वेति।परे श्रीपत्यादयस्तुल्यर्क्षगम्यगतयोरिति।मंगलैष्यस्य हेतुं त्यक्त्वा एकार्गलविद्धनक्षत्रमशेषमेवोज्झंति त्यजंति तेषामयमाशयः। हि यस्मात्कारणात्संध्यागतं संध्योदितं नक्षत्रं सर्वमेव गलहस्तयंति परिवर्जयंति । सैव भंगी रचना युक्तिः। एकार्गलस्य गले हस्तेन नोदयंतीति गलहस्तयंति । कल्यादित्वाण्णिच् । यद्वत्संध्यागतं रविणा पादविद्धमपि सर्वमेव त्यज्यते तद्वदेकार्गलस्थमपीत्यर्थः।"तिष्यपुनर्वस्वोर्नक्षत्रद्वंद्वे" इत्यत्र इतरेतरयोगेपि पृथक्त्वज्ञापकात्सर्वोपि द्वंद्वो विभाषया एकवत्स्यात् । अतो गतैष्यस्येत्येकत्वम् ॥ १६ ॥



क्रूरस्यभार्धांतरमृक्षमेवमनिष्टमित्येष विशेषवादः ॥ पापाच्चतुःपंचलवेषु चांद्रं जामित्रमस्मात्खलु पर्यणंसीत् ॥ १७ ॥

अथ कैश्चित्क्रूरषड्भांतरितमृक्षमनिष्टमिति विशेषितंतच्चांद्रजामित्रे परिणतमित्याह। उपजातिका। भार्धमंतरं यस्य तत्तथा क्रूरस्य षड्भांतरमृक्षमनिष्टमेवमिति एष केषांचिद्विशेषवादः विशेषोक्तिः।असौ यस्मात्पापाद्भार्धांतरमृक्षमस्मात्पापाच्चतुःपंचलवेषु चतुःपंचाशदंशेषु चांद्रं जामित्रं पर्यणंसीत् परिण-

मतिस्म । चंद्रजामित्रेण परिणतः नक्षत्रं हि चंद्रनिष्ठं प्रतिराशौ नवनवमांशाः तस्माद्राशीतरे स्थितः क्रूरश्चंद्राच्चतुःपंचाशदंश एव भवति । अतः परिणामे चांद्रजामित्रमेवेदमिति कृत्वा नायं विशेष इति भावः। "यमिरमिनमातांसक्रूचे" इति ईट्ट सगागमश्च ॥१७॥

क्षताहते दिग्धशरार्दितस्य शस्तं मृगस्यामिषमेव मन्ये ॥ क्रूरांघ्रिवेधाय पदं वदंति तेनैव तेषां निजपक्षहानिः ॥ १८ ॥

अथ कैश्चित्पादवेधे युक्तिरुक्ता तामनूद्य दूषयति। उपजातिका । विषादिना दिग्धेन परामृष्टेन शरेण अर्दितस्य विद्धस्य मृगस्य आमिषं मांसं क्षतादन्यत्र शस्तं तद्वद्यत्र पादे वेधः स एव पादोऽशुभ इति। एवमन्ये केचित्क्रूरांघ्रिवेधाय पदं विषयं वदंति तेनैव पदेन तेषां स्वपक्षहानिः स्यात् ॥ १८ ॥

विश्लेषमायाति यथासुभिःस्वैरेणः शरेणैकदिशि क्षतोपि ॥ तथांघ्रिवेधादपि तारकाणां क्रूरस्य नश्येद्बलरूपसंपत् ॥ १९ ॥

एतदेव स्पष्टं वक्ति। उपजातिका। यथैकदिशि एकस्मिन्प्रदेशे शरेणाक्षतो विद्धोपि एणः मृगः स्वैः असुभिः प्राणैर्विश्लेषं वियोगमायाति प्राणवियोगं प्राप्नोतीत्यर्थः। तथा क्रूरस्यांघ्रिवेधात्तारकाणां वलरूपयोः संपन्नश्येत् । एतदुक्तं भवति । यथा विषप्रदिग्धशरेण विद्धमृगस्य मांसं क्षतव्यतिरिक्तं शस्तं तद्वद्यस्मिन्पादे पापवेधः स एव दुष्ट इत्यन्ये वदंति । तदयुक्तम् । यद्यपि विद्धमृगस्य क्षतव्यतिरिक्तं मांसं शस्तं तथापि तस्य मृगस्य गतासुत्वमापन्नस्य वलरूपसंपन्नष्टा एवं तस्य पापवेधनक्षत्रस्यापि । एवं गलेपादुकान्यायेन तेषां स्वपक्षस्थापकपदेनैव स्वहानिरिति। अतो यदुक्तम् " अशुभविद्धमशेषमुडु त्यजेत्" इति तत्सम्यक् ॥ १९ ॥

यदंतगं हर्षणसाध्यशूलगंडव्यतीपातकवैधृतानाम् ॥ तत्रैव चंद्रोडुनि चंडमैशमस्त्रं पतेन्मंगलभंगलक्ष्म॥२०॥

अथ चंडायुधदोषमाह। उपजातिका। हर्षणादीनां षण्णां योगानामवसानस्थं यन्नक्षत्रं तस्मिन्नेव नक्षत्रे ऐशमीशस्येदमैशं चंडमुग्रमस्त्रं पतेत् चंडीशचंडास्त्रपातः स्यादित्यर्थः। तत्फलमाह। मंगलेति। मंगलानां भंगस्तदेव लक्ष्म यस्य तत्तथा मंगलभंजकमित्यर्थः ॥ २० ॥

गंशूविवव्यातिषुषट्शरत्रित्रिनंदषट्का घटिकाः क्रमेण ॥ द्यमां त्यजेत्पारिघमिंदुभान्वोः पर्वण्यतीते दिनसप्तकं च ॥ २१ ॥

अथ चंडायुधसंभवार्थं योगनिर्देशात्तत्साहचर्येण दुष्टयोगानां वर्ज्यविभागांस्तत्प्रसंगेन ग्रहणदुष्टकालं चाह । उपजातिका । गं गंडः शू शूलः वि विष्कंभः व वज्रः व्या व्याघातः अति अतिगंडः एतेषु योगेषु तेषामादिमाः क्रमेण षट्शरत्रित्रिनंदषट्काः६ । ५। ३।३ । ९ । ६ घटिकास्त्यजेत् । अत्राद्यक्षरग्रहणेनैव नामग्रहणम् । यथा बृहज्जातके " शकुत्तुकुशुचराद्या वृद्धितो वीर्यवंतः"इति परिघस्येदं पारिघमादिमं द्व्यंशमर्द्धं त्यजेत् । कुत्रचित्त्र्यंशमिति पाठः । स तु बहुवाक्यविरोधान्नादरणीयः । इंदुभान्वोः पर्वण्यतीते सति चंद्रार्कग्रहणानंतरं दिनसप्तक त्यजेत् ॥ २१ ॥ छ॥

यस्मिन्नृक्षे वीक्ष्यते सैंहिकेयो भेदस्तारास्वेटयोर्यत्र वा स्यात्॥आषण्मासं तत्र लग्नेंदुभाजि भ्राजिष्णु स्यान्नो शुभं कर्म किंचित् ॥ २२ ॥

अथ ग्रहणादिसंबधिनक्षत्रदोषमाह।शालिनी ।यास्मि-

न्भृक्षे नक्षत्रे सैंहिकेयो राहुर्दृश्यते ग्रहणं भवेदित्यर्थः। ग्रहणं सर्वोत्पातानामुपलक्षणं।यदपि च त्रिविधोद्भूतदोषितमित्युक्तत्वात्। वा इत्यथवा तारखेटयोर्भौमादिष्वन्यतमखेटयोर्भेदयोगः स्यात्तत्र नक्षत्रे आषण्मासं षण्मासपर्यंतं लग्नेंदुभाजि लग्नेंदू भजतीति लग्नेंदुभाक्तस्मिँल्लग्नेंदुभाजि लग्नस्थे चंद्रे वा सतीत्यर्थः। किंचिच्छुभं कर्म भ्राजिष्णु भ्राजते तद्भ्राजिष्णु शोभमानं न स्यात्। तद्यथा। अश्विन्यां ग्रहणे जाते सत्र्यंशत्रयोदशभागांतः मेषलग्ने सति अश्विनीलग्नस्थं स्यात्। एवं भरण्यादिष्वपि। चंद्रस्थनक्षत्रमिति प्रसिद्धम्।उक्तं च व्यवहारतत्त्वे "उत्पातैस्त्रिविधैर्हतं ग्रहणगं चामासषट्कं तथा" इति॥ २२॥

उत्पातपापग्रहमुक्तमृक्षं यदींदुराक्रम्य पुनर्भुनक्ति॥ तदा तदर्हं सकलेषु कर्मसु त्यजेत्समक्रांतितनू रवींद्वोः॥ २३॥

अथोत्पातादिदोषमुक्तनक्षत्रस्य शुद्धिमाह।उपजातिका। उत्पातास्त्रिविधाः पापग्रहा रविभौमादयस्तैर्मुक्तं तदुत्पन्नदोषैस्त्यक्तं यन्नक्षत्रं तत्तदा एषु सकलेषु शुभेषु कर्मसु अर्हं योग्यं स्यात्तदा कदा यदि इंदुः आक्रम्य पुनर्भुनक्ति दोषत्यागानंतरम् चंद्रभोगे

जाते सति द्वितीयचंद्रभोगे शुद्धं भवतीत्यर्थः। अथै-
तत्प्रसंगेन पातदोषमाह। त्यजेदिति।रवींद्वोःसमक्रांति-
तनू सकले शुभकर्मसु त्यजेत्। क्रांत्योस्तनू स्वरूपे
समे च ते क्रांतितनू च समक्रांतितनू चंद्रार्कयोर्लवाद्ये
क्रांती यावत्समे तावत्समे तावदित्यर्थः॥ २३॥

त्रिभागशेषे ध्रुवनाम्नि चैंद्रे त्र्यंशे गते
संप्रति संभवोऽस्य॥ मानार्धयोगा-
धिकमिंदुभान्वोः क्रांत्यंतरं चेन्न त-
दैष दोषः॥ २४॥

अथ तत्संभवकालमाह। उपजातिका। ध्रुवनामा
द्वादशो योगस्तस्मिंस्त्रिभागशेषे तृतीयांशावशिष्टे स-
ति ऐंद्रे षड्विंशे योगे त्र्यंशे गते च सति। चकारो वार्थे।
अस्य क्रांतिसाम्यलक्षणस्य संप्रतीदानीं संभवः स्या-
त्। तदासन्ने काले भवेदित्यर्थः। ध्रुवे व्यतीपाताख्यः
ऐंद्रे वैधृताख्य इति ग्रंथनिर्माणकाले द्वादश अयनांशा
आसन्। तदभिप्रायेणेदमुक्तं ततो यथा यथा अयनां-
शा अधिकास्तथा तथा तयोर्योगयोर्न्यूनता चिंत्या।
तदानयनं श्रीगुरुणा केशवेनोक्तं "त्रिघ्नायनांशा नख-
भाजितास्तद्धीनाश्वसार्धत्रिभुवोद्रिपक्षाः।तत्तुल्ययुत्यो-
र्गतयोर्विलोक्यः पातो व्यतीपातकवैधृताख्यः।"इति
चेदिंदुभान्वोः क्रांत्यंतरमानार्धयोगाधिकं तदा एष

दोषो न स्यात् । चंद्रार्कयोः क्रांत्यंतरं यावन्मानैक्या-द्यावन्न्यूनं तावदेव चायं दोष इत्यर्थः । तदानयनं ग्रंथ-कृता करणकंठीरवे प्रतिपादितं दिङ्मात्रमत्रोक्तम् २४

स्फुरददूषणभूषणकांतयो यदि भवं-
ति मृगांकमृगीदृशः ॥ करमवाप्य
वरः सुतनोस्तदा शुभरसं भरसंभृ-
तमश्नुते ॥ २५ ॥

अथ नक्षत्रशुद्धेः प्राशस्त्यमाह।द्रुतविलंबितम्।मृगां-कस्य मृगीदृक् तस्या मृगांकमृगीदृशः चंद्रनक्षत्रस्य यदि स्फुरददूषणभूषणकांतयः स्यः । अदूषणं पापवे-धादिराहित्यं भूषणं शुभदृष्ट्यादिकं कांतिः प्रकाशः अक्षीणत्वादि।स्फुरस्फूर्तौ।स्फुरंति ताः स्फुरंत्यः परि-पूर्णाः ताश्च ता अदूषणभूषणकांतयश्च तास्तथा तदा सुतनोर्वध्वाःकरमवाप्य करग्रहणं कृत्वा वरःभरेण संभृ-तं परिपूर्णं शुभरसं शुभो भोगमश्नुते प्राप्नोति।दोषरहित नक्षत्रे पाणिग्रहकृद्वरः अतिशुभं प्राप्नोतीत्यर्थः॥२५॥

इति विवाहवृन्दावने नक्षत्रशुद्धिवर्ण-
नं नाम प्रथमोऽध्यायः ॥ १ ॥

इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्म-जगणेशविरचितायां विवाहवृंदावनटीकायां विवाहदी-पिकायां नक्षत्रशुद्धिप्रकरणवर्णनं नाम प्रथमोऽध्यायः १

अथ कालमीमांसाध्यायः ॥ जन्मलग्नमिदमंगमंगिनां मेनिरे मन इतीन्दुमन्दिरम्॥सौहृदं हि मनसोर्न देहयोर्मेलकस्तदयमिंदुगेहयोः ॥१॥

अथ कालमीमांसाध्यायो व्याख्यायते। नक्षत्रशुद्धेर्मुख्यत्वादादौ तामभिधायेदानीं राशिघटितं विवक्षुस्तत्प्रसंगेन तावत्कालमीमांसा निरूप्यते। तत्रादौ जन्म राश्योरेव घटितावलोकने युक्तिमाह। रथोद्धता। अंगमस्तीत्येषामंगिनः तेषां शरीरिणामिदं प्रसिद्धं जन्मलग्नमंगं शरीरं पूर्वमुनयो मेनिरे मन्यंते स्म। इंदुमंदिरं चन्द्रगृहं जन्मनि यश्चंद्रराशिः स मन इति मेनिरे। तथा चाहुः शौनकादयः " शारीरं लग्नवशात्सुखदुःखं मानसं शशांकवशात् " इति। हि यस्मात्कारणात्सौहृदं मित्रत्वं मनसोरेव न तु देहयोः नकुलसर्पयोरपि। सौमनस्येऽसति सहवासित्वादर्शनात्। तस्मात्कारणादयं मेलकः इंदुगेहयोश्चंद्रराश्योरेव स्यात्। जन्मराश्योरेव घटितयोगो नतु जन्मलग्नयोरिति। सुष्ठु हृदयं यस्य सुष्ठु च तद्धृदयं चेति वा तस्य भावः सौहृदम्। भावे अण् हृदयस्य हृदादेशः पूर्वपदादेर्वृद्धिः। यद्वा सुष्ठु हृदयं यस्यासौ सुहृत् " सुहृदुर्हृदौ मित्रामित्रयोः " इति निपातः। सुष्ठु च तद्धृ-

श्चेति वा तस्य भावस्तथा । ननु " हृद्भगसिंध्वंते पूर्वपदस्य च" इति पूर्वोत्तरपदाद्योर्वृद्ध्या सौहार्दमित्येव स्यात्।छंदसितु"महते सौभगाय"इत्यादयःप्रयोगाश्छंदस्येव । तत्र सर्वविधीनां विकल्पविधानादिति प्रसादकारादयः।यत्तु श्रीभागवते"न तत्र सौहृदं धर्मः संतोषो भूतसौहृदम् " इत्यादिषु दृश्यते । तदपि संदिग्धं, पुराणानामपि च्छांदसत्वात्।विशेषेण श्रीभागवतस्य। अतो भाषायां सौहृदमिति प्रयोगः कथं युज्यते। यदि तु ग्रंथकृता प्रयुक्तस्तर्हि कथंचिद्गतिमात्रं चिंत्यते। " ओर्गुणः " इत्यनेन संज्ञापूर्वकस्य ज्ञापितत्वात् उभयपदवृद्धेरनित्यत्वमिति। एवं'वसुभे चलसौहृदयस्त्रियो द्वेष्या 'इति वराहोक्तमपि निवेदितव्यम् ॥१॥

चंद्रराशिवशमेव सौहृदं सूक्ष्मयोरपि न किं नवांशयोः ॥ एवमस्तु मकरांशगे विधौ कर्कटेऽपि किमु नोत्तरायणम् ॥ २ ॥

ननु चंद्रराश्योर्मेलकस्तर्हि तन्नवांशयोरपि कथन्न मेलक इत्याह–रथोद्धता। सौहृदं मित्रत्वं चंद्रराशिवशं चंद्रराश्यधीनमेवेति यदुक्तं तत्सूक्ष्मयोर्नवांशयोरपि कथं न स्यात् । जन्मनि यद्राशौ चंद्रः स जन्मराशिरित्युच्यते तयोश्चेन्मेलको विलोक्यते तर्हि तदंत-

गतयोः सूक्ष्मयोश्चंद्रनवांशयोरपि कथं न मेलक इत्याक्षेपः । अपिः समुच्चये । अत्रोत्तरम्।एवमस्त्विति। चेदित्यध्याहारः । एवं चेदस्तु भवतु तर्हि कर्कटे कर्कटराशिस्थे विधौ मकरांशगे मकरनवांशस्थिते सति उत्तरायणं न स्यात् । अयनं हि राशिवशादेव न तु नवांशवशादिति प्रसिद्धम् । अतो राश्योरेव मेलक इति ॥ २ ॥

मासषङ्कमयनं च दक्षिणादित्य एति तदिति श्रुतिर्जगौ ॥ मूलसंक्रमसमां विवस्वतः स्वस्वभंगिमृतवोऽपि बिभ्रति ॥ ३ ॥

अथ राशिवशादेवायनमित्यत्र प्रमाणमाह—यस्मात्कारणान्मासषङ्कं षण्मासपर्यंतं दक्षिणा दक्षिणस्यां दिशि "दक्षिणादाच्, तद्धितश्चासर्वविभक्तिः" इत्यव्ययम् आदित्यः सूर्यः एति गच्छति तत्तस्मात्कारणादिति एवंविधमयनं श्रुतिर्जगौ जगाद । यस्मात्कारणात्सूर्यो मासषङ्कं दक्षिणां दिशं गच्छति तस्मात्तत्प्रमाणमयनं श्रुतिर्जगादेत्यर्थः । एवं सयुक्तिकमागमप्रमाणमुक्त्वाऽन्यप्रमाणांतरमाह-मूलसंक्रमेति । नवांशापेक्षया मूलराशिविवस्वतः सूर्यस्य मूलसंक्रमो राशिसंक्रांतिः तत्समां तत्सदृशीम् ऋतवो वसंतादयोपि स्वस्वभंगिं

स्वीयस्वीयरचनां चिह्नमिति यावत्।बिभ्रति धारयंति। वसंते पुष्पोद्गमादि ग्रीष्मे निदाघादि इत्यादीनि यान्यृतुचिंह्नानि तानि रविराशिसंक्रमवशेषु तत्तदृतुषु प्रत्यक्षं दृश्यंते । अतो राशिवशादेव मेलक इति सिद्धम् ॥ ३ ॥

किं दिनर्क्षविरहे करग्रहो नेष्यते तदु-
दयक्षणेष्वपि ॥ स्थूलमेवमखिलं ज-
गत्फलं तद्विशेषयति सूक्ष्मतागतिः४

अथ युक्त्यंतरमाह–रथोद्धता। दिनर्क्षस्य दिवसनक्षत्रस्य विरहे वियोगे सति करग्रहनक्षत्रालाभे सतीत्यर्थः । तस्य करग्रहनक्षत्रस्य उदये क्षणेषु मुहूर्तेष्वपि करग्रहः किन्नेष्यते । "धिष्ण्ये तस्मिंस्तस्य भस्योदयो वा"इति।"यस्मिन्धिष्ण्ये यच्च कर्मोपदिष्टं तद्दैवत्ये तन्मुहूर्तेऽपि कार्यम्"इति च। कथितेऽपि दिननक्षत्रालाभेसति तदुदये तन्मुहूर्ते वा करग्रहो महद्भिः कथं नेष्यते अपि तु नेष्यत इत्यर्थः । अतोऽखिलं समस्तं जगतः फलं स्थूलमेवमिति । एवं च तर्हि सूक्ष्मफलस्य गतिमाह–तद्विशेषयतीति । तत्र स्थूलफलं सूक्ष्मतागतिः सूक्ष्मफलस्य गतिः विशेषयति विशेषं करोति । सूक्ष्मफलं स्थूलफलस्य सविशेषतां करोतीत्यर्थः॥ ४॥

अव्यवस्थितिरिति प्रतिवेलं तत्तदूह-
नविकल्पसमूहैः॥ स्थूलमप्यनुसरंति
कृतींद्राःकेवलं न रमणीयमणीयः ५

तर्हि सूक्ष्ममेव फलं प्रमाणं कथं न स्यादित्याशंकायामाह—स्वागता । प्रतिवेलं तत्तदूहनविकल्पसमूहैः अव्यवस्थितिः स्यादिति हेतोः मुनींद्राः स्थूलमप्यनुसरंति । केवलमणीयो न रमणीयमित्यन्वयः। वेलां वेलां प्रतीति प्रतिवेलं वीप्सार्थेऽव्ययीभावः। तस्यास्तस्या वेलाया ऊहनं वितर्कस्तस्य विकल्पास्त्रुट्यादयः तेषां समूहास्तैः कृत्वा अव्यवस्थितिरव्यवस्था स्यादिति हेतोर्मुनींद्रा गर्गादयः स्थूलं फलं मासतिथ्यादिकमप्यनुसरंति तत्र प्रवर्त्तंते। केवलमणीयः सूक्ष्मतरं फलं न रमणीयं स्यात्। अतिशयितमणु अणीयः सूक्ष्मफलस्यानवस्थानात्स्थूलेष्वपि प्रवर्तंत इति भावः । एतदपि स्पष्टयिष्यति ॥ ५ ॥

भिन्नभिन्नफलभाग्भुवि भूयानेकधि-
ष्ण्यदिनजोऽपि जनोऽयम्॥सूक्ष्मता-
ऽपि ननु तेन गरिष्ठा सा च मूलमनु-
रुध्य विधेया ॥ ६ ॥

एवं चेत्तर्हि सूक्ष्मफलमकिंचित्स्यात्तत्राह–स्वागत। भुवि पृथिव्यां वर्तमानः अयं भूयान् बहुतरो जनः। जातावेकवचनम्। एकधिष्ण्यदिनजोऽपि एकनक्षत्रतिथिजातो पि भिन्नफलभाक् विसदृशफलभागी भवतीति प्रत्यक्षं तेन कारणेन सूक्ष्मतापि गरिष्ठा गरीयसी स्यात् । अपिः समुच्चये। तर्हि स्थूलं त्याज्यं स्यात्तत्राह। सा चेति। सा च सूक्ष्मता मूलं स्थूलम् अनुरुध्य अनुसृत्य विधेया स्यात्। स्थूलानुसारेण सूक्ष्मतापि ग्राह्येत्यर्थः ॥ ६ ॥

सूक्ष्मो नवांशाद्द्विरसांश एव त्रिंश-
ल्लवस्तल्लवतोऽपि सूक्ष्मः ॥ ततोऽपि
लिप्तेत्यवलिप्तवाचां दृगेतु कस्यां नि-
यतौ समस्याम् ॥ ७ ॥

कथं स्थूलमनुरुध्य सूक्ष्मता ग्राह्येत्येतदर्थं सूक्ष्मताया अनवस्थानं प्रकटयति–उपजातिका । 'सूक्ष्मयोरपि न किं नवांशयोः' इति नवांशः किल सूक्ष्म उक्तः। नवांशादपि द्विरसांशो द्वादशांशः सूक्ष्मः । द्वौ च रसाश्च तैः अंशः आदौ द्व्यंशः ततस्तै रसांश इति कृत्वा द्वादशांश एव सिद्धः। यथा "सूर्यनंदैर्हृतं तत्स्यादायुर्मासादिकं स्फुटम्" इत्यादिषु सूर्यहृतं सन्नंदहृतमिति व्याख्यायते न तु द्वादशाधिकनवशतैस्त-

द्यदत्रापि । अत एव बृहज्जातके । 'चंद्रोपगाद्विरसभागसमानरूपम्'।इति।तद्भवतस्तस्माद्द्वादशांशादपि त्रिंशद्भवास्त्रिंशांशः सूक्ष्मःततोपि लिप्ता कला सूक्ष्मा इतीत्यनेन प्रकारेण अवलिप्तवाचाम् । अवलिप्ता उपलिप्ता वाक् येषां ते तथा । एवमुक्तवतामित्यर्थः । पुरुषाणां दृक् दृष्टिः कस्यां नियतौ समस्यां समाधानमेतु गच्छतु।समसनं समस्या क्यप् । एवं सूक्ष्ममुक्तवतां दृष्टेर्न कुत्राप्यवसानमस्ति । सूक्ष्मस्य अपर्यवसानादिति भावः ॥ ७ ॥

अत्यंतसूक्ष्मः स किलैकदेशो येनाखिलानां भिदुरा फलर्द्धिः ॥ नास्मादृशां दृग्विषयः स तस्मान्मूलानुकूला व्यवहारसिद्धिः ॥ ८॥

एवं सूक्ष्मकालानां कलने सति सिद्धांतमाह—इंद्रवज्रा । स किल कालस्यैकदेशः अत्यंतसूक्ष्मः अतिदुर्लक्ष्यः । येन कृत्वाखिलानां प्राणिनां फलर्द्धिः फलसंपद्भिदुरा भेदेन शीला स्यात् । भिन्नभिन्नेति यावत्। " विदिभिदिच्छिदेःकुरच्।"स सूक्ष्मकालः अस्मादृशां वयामिव दृश्यंते तेऽस्मादृशः तेषां चर्मचक्षुषां दृग्विषयो दृष्टिगोचरो न स्यात् । दुर्ज्ञेय इति यावत्।तथाच नारदः "स्वस्थे नरे सुखासीने यावत्स्पंदति लोचनम्।

तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः॥तत्पराच्छतशो भागस्त्रुटिरित्यभिधीयते । त्रुटेः सहस्रभागो यो लग्नकालः स उच्यते ॥ देवोऽपि तं न जानाति किं पुनः प्राकृतो जनः ॥ सकालोऽप्यन्यकालो वा पूर्वकर्मवशाद्भवेत्॥निमित्तमात्रं दैवज्ञस्तद्वशाच्च शुभाशुभम् ॥"इति सिद्धांतयति। तस्मादिति । तस्मात्सूक्ष्मकालस्यादृग्विषयत्वात् सर्वजनानां व्यवहारसिद्धिः मूलानुकूला स्यात् । मूलस्यानुकूला मूलानुकूला स्थूलानुसारिणी वत्सरमारभ्य नवांशपर्यंतमित्यर्थः । अस्मत्साध्यत्वात् ॥ ८ ॥

इति सति यदि मूले सूक्ष्मभावांश-
लब्धिस्तदखिलमपि सिद्धं नास्ति
चेन्मूलसंपत् ॥ तदुभयलवनाशो
दुर्गमत्वादणूनां परिणतिरिति रूढा
कालमीमांसयानः ॥ ९ ॥

अथानयोः स्थूलसूक्ष्मयोः समाधानमाह—मालिनी । इत्यनंतरोक्ते सति मूले स्थूलमध्ये यदि सूक्ष्मभावांशलब्धिर्लाभश्चेत्स्यात् तत्तदाखिलं सर्वमपि सिद्धं फलितं स्यात् । एवं स्थूलं तदंतर्गतं सूक्ष्मं च विलोकनीयमित्युक्तम्।अन्यथा बाधकमाह।नास्तीति।

चेन्मूलं संपत्स्थूललब्धिर्नास्ति तदा तदुभयलवनाशः स्यात् । फलजातस्योभयलवौ स्थूलसूक्ष्मलक्षणौ यौ विभागौ तयोर्द्वयोरपि नाशः स्यात् । कस्मात्। अणूनामतिसूक्ष्माणां दुर्गमत्वात् ॥ दुःखेन गम्यंते ज्ञायंते तानि दुर्गमाणि तेषां भावस्तत्त्वं तस्मात् । ततो नवांशपर्यंतं सूक्ष्मकालस्य मनुष्यगम्यत्वात्तत्पर्यंतं स्थूलांतर्गतं सूक्ष्मं विचारणीयमिति सिद्धम् अतो नवांशयोरपि मेलकः स्यादिति । नवांशमेलकस्य जने व्यवहारो नास्तीत्येतत्सप्रपंचं वक्ष्यति। एतदुक्तं मया मनसि समाहितमित्याह । परिणतिरिंति।इतीयं कालमीमांसया कालविचारणेन नो ऽस्माकं परिणतिः रूढा स्फुरिता। कालस्य मीमांसा विचारणम् मानिति स्वार्थे सन् ततः प्रत्ययांताद्भावे अच् । कालविचारणे क्रियमाणे अस्माकमयं बुद्धिपरिणामो रूढ इत्यर्थः ॥ ९ ॥

## इति विवाहवृंदावने कालमीमांसाध्यायो द्वितीयः ॥ २ ॥

इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां कालमीमांसाध्यायो द्वितीयः ॥ २ ॥

# अथ मेळकाध्यायः ॥

व्यये न वित्तं न तपस्यपत्यं नायु-र्द्विषत्येव वधूवराणाम् ॥ द्विर्द्वादशः पंचनवाष्टषष्ठो जन्मर्क्षयोः सख्य-विधिर्न दृष्टः ॥ १ ॥

एवं प्रासंगिकं कालमीमांसनं निरूप्य अधुना प्रकृतं मेळकाध्यायं निरूपयति। तत्रादौ राशिमेळकं सोपपत्तिकमाह—उपजातिका।वधूवराणां स्त्रीपुरुषाणां जन्मर्क्षयोर्जन्मनः सकाशादन्यराश्योर्द्विद्वार्दशः सख्याविधिः मैत्राविधिर्न दृष्टः न लक्षितः पूर्वमुनिभिः।द्वौ च दश च द्विर्द्वादश तयोः पूरणो द्विर्द्वादशः एकस्य राशेः सकाशादन्यराशिर्द्वितीयस्तस्मादप्यन्यो द्वादश इत्यर्थः । अत्र हेतुः । व्यये न वित्तमिति । यतो व्यये सति वित्तं न स्यात्। व्ययो द्वादशस्थानं वित्तं द्वितीयं यत्र व्ययस्तत्र कुतो धनमिति। अनेनैवात्र दरिद्रत्वमिति फलं च सूचितं भवति।एवं तपसीत्यादि हेतुना पंचनवेत्यादि । पंच च नव च अष्ट च षड्च पंचनवाष्टषट्व तेषां पूरणः पंचनवाष्टषष्ठः पंचमो नवमोऽष्टमःषष्ठ इत्यर्थः। तपासि सति अपत्यं न स्यात्। तत्र ब्रह्मचर्यादिनियमविधानात् । तपो नवमंस्थानमपत्यं पंचमम्

अतो न पंचमनवमः सख्यविधिः । अत्रानपत्यतेति फलमपि सूचितम्। द्विषाते शत्रौ सति आयुर्नैव स्यात् । शत्रुसांनिध्ये कथमायुरिति शत्रुः षष्ठमायुरष्टमम् । अतोष्टमषष्ठो न सख्यविधिः। अत्र नायुष्यमिति फलं च । अर्थाच्छेषाश्चतुर्दशमतृतीयैकादशोभयसप्तमाःशुभाः एकराशित्वे विशेषं वक्ष्यति ॥ १ ॥

दृश्यते सुहृदभिन्नपतित्वं क्षेत्रयोस्तदखिलेष्वपि मेलः ॥ भीरुभादचलपंचतृतीयाशोककवैरविपदेवरतारा ॥२॥

अथास्यापवादं तारमैत्रं चाह– स्वागता । यदा क्षेत्रयो राश्योः सुहृदभिन्नपतित्वं दृश्यते तत्तदा अखिलेषु द्विर्द्वादशादिषु अपि मेलः सख्यं स्यात् ।मिलनं मेलः।किं पुनः।शुभेषु चतुर्थदशमादिषु सुहृदौ अभिन्नौ च सुहृदभिन्नौ तौ च तौ पती च तयोर्भावस्तत्त्वं पत्योः सुहृत्त्वमेकत्वं चेत्यर्थः । राश्यधिपांस्तत्सुहृत्त्वं च वक्ष्यति ॥ तथा चोक्तम् । " न वर्णशुद्धिर्न गणो न योनिर्द्विर्द्वादशे चैव षडष्टकेऽपि । वरेऽपि दूरे यदि वा त्रिकोणे मैत्री यदि स्याच्छुभदो विवाहः"इति। अथ तारामैत्रं भीरुभादिति। भीरुः स्त्री। "विशेषास्त्वंगना भीरुः कामिनी वामलोचना।" इत्यभिधानात् । तस्या नक्षत्रमारभ्य वरतारा वरनक्षत्रम्।अचलपंचतृतीयाक-

मेण शोकवैरविपदे स्यात् । द्वंद्वैकत्वे क्लीबत्वम् । अचलाश्च पंच च त्रयश्च तेषां पूरणी तथा सप्तमी पंचमी तृतीया चेत्यर्थः । सप्तमी शोकाय पंचमी वैराय तृतीया विपदे इति एतत्प्रथमनवके एवं पुनर्द्वितीये तृतीयेऽपि । केचिदेवमुभयभाभ्यामपीच्छंति । तथा चाहुः "पुसृक्षाद्गणयेद्यावत्कन्यर्क्षं कन्यभादपि ॥ वरभं नवहृच्छेषं ताराः संति परस्परम्" ॥इति ।एतदन्यदेशेषु प्रसिद्धं ग्रंथकृतोक्तं तत्तद्देश एव ॥ २ ॥

नक्षत्रमेकं यदि भिन्नराश्योरभिन्नराश्योर्यदि भिन्नमृक्षम्॥ प्रीतिस्तदानीं निबिडा नृनार्योश्चेत्कृत्तिकारोहिणिवन्ननाडी ॥ ३ ॥

अथैकनक्षत्रे एकराशौ च विशेषमाह-उपजातिका । यदि नृनार्योर्वरवध्वोःभिन्नराश्योः सतोर्नक्षत्रमेकं भवति अथवा अभिन्नराश्योः एकराश्योरपि भिन्नमृक्षं स्यात् । अपि वार्थे । तदा निबिडा अतिशयिता नृनार्योः प्रीतिः स्यात्तत्र नाडीदोषोपि नास्तीत्याह—चेत्कृत्तिकेति । चेत्कृत्तिकारोहिणिवत्तदा नाडी न स्यात् । यथा कृत्तिकारोहिण्योरेकनाडीत्वेपि एकराशौ सति नाडीदोषो न स्यादित्यर्थः । अनेनैव गणदोषोपि निरस्तः । एवं शततारकापूर्वाभाद्रपदादिष्वपि । तथाच गर्गः " एकराशि विना नाडीयोगमादौ विवर्ज-

येत्॥न दोषस्त्वेकराशिस्थे भकूटेन्येषु मृत्युदः"इति। भृगुरपि " दंपत्योरेकराशिश्चेत्पृथगृक्षं यदा भवेत् । वसिष्ठोक्तो विवाहःस्याद्गणनाडी न चिंतयेत्।"इति ३॥

पराशरः प्राह नवांशभेदादेकर्क्षरा-श्योरपि सौमनस्यम् ॥ एकांशक-त्वेपि वसिष्ठशिष्यो नैकत्र पिंडे कि-ल नाडिवेधः ॥ ४ ॥

एतद्बहुमतमुक्त्वा मतांतरमाह—उपजातिका।एकौ च तौ ऋक्षराशी च तौ तथा एकनक्षत्रे एकराशौ सत्यपीति । अपिः संभावनायाम् । नवांशभेदान्नक्षत्रचरणभेदात्सौमनस्यं सुहृत्त्वं पराशरः प्राह एकनक्षत्रे एकराशावशुभमिति बहुमतं प्रागुक्तं तत्रापि चरणभेदे सति शुभमिति पराशरमतमित्यर्थः । तत्राप्येकांशत्वे चरणैकत्वेपि वसिष्ठशिष्यः । सौमनस्यं प्राह—एतद्दूषयिष्यति । अत्र नक्षत्रैक्ये नाडीदोषो नास्तीत्याह । नैकत्रेति । द्वयोरपि नक्षत्रयोरेकत्र एकस्मिन् स्थाने पिंडे गोलके सति किल निश्चयेन नाडिवेधो न स्यात् । द्वयोर्व्यवहितयोः सत्येव वेधः स्यादेकत्वे तु न स्यादिति भावः । नाडिरितीकारांतः" कृदिकारादक्तिनः" इति ङीवंतोप्यस्ति ॥ ४ ॥

नाग्निर्दहत्यात्मतनुं यथाहि द्रष्टा

स्वदृष्टेर्नहि दर्शनीयः ॥ एकांशकत्वेपि समप्रभावान्न भर्तृभार्याव्यवहारसिद्धिः ॥ ५ ॥

अथ नाडीदोषाभावेऽत्र दृष्टांतमाह–उपजातिका। यथाहि।अग्निः आत्मतनुं स्वमूर्तिं तेजोरूपां न दहति अपि च दर्शनीयो रमणीयः पुरुषः स्वदृष्टेर्द्रष्टा न स्यात्। कर्मणि षष्ठी। चक्षुष्मानपि द्रष्टा स्वदृष्टिं न पश्यतीति। तथा एकत्र पिंडे नाडीवेधो न स्यादिति पूर्वेणान्वयः।अथैकांशकत्वे दोषमाह। एकांशकत्वे इति। एकांशकत्वे चरणैकत्वे सति तु भर्तृभार्याव्यवहारसिद्धिर्न स्यात्। कुतः समप्रभावात् समानसामर्थ्यात्। अय भावः। नृनार्योरेकांशकत्वात्समानसामर्थ्यं तस्मिन् सति अयं भर्ता तदधीनेयं भार्येति सर्वव्यवहारो गार्हस्थ्यादिरूपो न संभवतीति अत एकांशकत्वे सौमनस्यं न स्यादिति भावः ॥ ५ ॥

रुद्रार्यमेंद्रवरुणद्वयमश्विनी च विश्वाग्निवायुफणिनां युगमंत्यभं च ॥
शेषाणि चेति नवकत्रयमेकयाते जन्मोडुनी वरवधूनिधनाय नाडी ॥६॥

अथ नाडीवेधमाह–वसंततिलका। रुद्र आर्द्रा अर्यमा उत्तराफाल्गुनी इंद्रो ज्येष्ठा वरुणः शततारका

एतानि चत्वार्यारभ्य प्रत्येकं द्वयमेवमष्टौ अश्विनी च एकाकिनी एवमेको नवकः विश्वे उत्तराषाढा अग्निः कृत्तिका वायुः स्वाती फणी आश्लेषा एतदारभ्य प्रत्येकं युगं युग्ममेवमष्टौ । अंत्यभं रेवती च एकाकिनी एवं द्वितीयो नवकः।शेषाणि पूर्वाफाल्गुनी चित्रा धनिष्ठा भरणी मृग पूर्वाषाढानुराधा पुष्योत्तराभाद्रपदाःअयं तृतीयो नवकः।इतिनवकत्रयं स्यात्। वधूवरयोर्जन्मोडुनी जन्मनक्षत्रे एकपाते एकस्मिन्नवकमध्ये प्राप्ते तदा नाडी स्यात्। किमर्थं वरवधूनिधनाय द्वयोरेकनाड्यां मृत्युःस्यादित्यर्थः ।अत्र रुद्रादिदेवता निर्देशेन तन्नक्षत्रेणार्द्रादि गृह्यते । लोके हि स्वामिशब्दं सेवके प्रयुंजाना दृश्यंते अतो देवताशब्दस्तन्नक्षत्रतिथ्यादिषूपचर्यंते । तथाविधवृद्धप्रयोगदर्शनाच्च । " नागोद्वादशनाडीभिर्दिक्पंचदशभिस्तथा ॥ भूतोष्टादशनाडीभिर्दूषयत्युत्तरांतिथिम् । " इत्यादिनागः पंचमी दिग्दशमी भूतश्चतुर्दशीति ॥ ६ ॥

प्रमीयमाणोपि मतैर्मुनीनां त्रिद्व्यंघ्रिनक्षत्रभुवः कुमार्याः ॥ नाडिचतुःपंचतयस्य पक्षो नक्षोदवीथीविषयत्वमेति ॥ ७ ॥

अथ त्रिनाडिकाचक्राभिप्रायेण नाडीवेध उक्तः के-

चित्तु त्र्यंघ्रिभद्व्यंघ्रिभोत्पन्नकन्यायाश्चतुः पंचनाडीचक्रे वेधमाहुः तन्मतं दूषयति—उपजातिका । त्रयश्च द्वौ च अंघ्रयो यस्य त्रिद्व्यंघ्रि तच्च तन्नक्षत्रं तत्र भवतीति त्रिद्व्यंघ्रिनक्षत्रभूस्तस्याःकुमार्याः क्रमान्नाडीचतुःपंचतयस्य चत्वारश्च पंच चतुःपंच तेऽवयवा यस्य तच्चतुःपंचतयं नाडीचतुष्टयं नाडीपंचकं चेति "संख्याया अवयवे तयप्" तस्य पक्षः मुनीनां हारीतादीनां मतैःप्रमीयमाणोपि प्रमाणं प्राप्नुवन्नपि आगमप्रामाण्यं प्राप्तोपि क्षोदवीथीविषयत्वं क्षोदस्य वीथी पदवी तस्याः विषयत्वं विचारमार्गगोचरत्वं नैति न गच्छति त्र्यंघ्रिभं कृत्तिकादिकं द्व्यंघ्रिभं मृगशीर्षादिकम् । तथा च हारीतः "त्र्यंघ्रिभे द्व्यंघ्रिभे कन्या जाताथागणयेत्क्रमात्॥ वन्हिभादिन्दुभान्नाडीं चतुःपंचसु पर्वसु॥" इति अस्य विषयमाह—वृद्धगर्गः । "जांगले च चतुर्माला पांचाले पंचमालिका । त्रिमाला सर्वदेशेषु विवाहे ऋषिसंमतम्॥" इति । एवं क्षोदे क्रियमाणे स पक्षोऽत्र देशे व्यवहारं न प्राप्नोतीत्यर्थः ॥ ७ ॥

अश्वेभाजोरगाहिश्वखनकरिपवो
मेष ओतुर्द्विराखुगौकाल्यौ व्याघ्र-
काली पशुरिपुहरणैणश्वकीशाः क्रमे-
ण॥ द्वौ बभ्रू कीशसिंहौ तुरगमृगप-

तिच्छागमातंगमेवं नेष्टायोनिः सवै-
रा वरयुवतिनृपामात्ययोरश्विनीत८॥

अथ योनिमैत्रमाह-स्रग्धरा।अश्वस्तुरगः इभो हस्ती अजो मेषः उरगः सर्पः पुनरहिः सर्पः श्वा शुनकः स्वनकरिपुर्मूषकशत्रुर्मार्जारः मेषः अजः पुनरोतुर्मार्जारः द्विर्द्विवारम् ।आखुर्मूषकः गौर्धेनुः काली महिषी व्याघ्रः प्रसिद्धः पुनः काली महिषी पुनः पशुरिपुर्व्याघ्रः हरिणो मृगः पुनरेणो मृगः पुनः कीशो वानरः सिंहः प्रसिद्धः तुरगोऽश्वः पुनर्मृगपतिः सिंहः छागो मेषः पुनर्मातंगो हस्ती द्वंद्वैकत्वे क्लीबत्वम्।एवं क्रमेण आश्विनीमारभ्य योनिः स्यात् । सा योनिः सवैरा नेष्टा कयोः वरयुवतिनृपामात्ययोः। वरश्च युवतिश्च वरयुवती नृपश्च अमात्यश्च नृपामात्यौवरयुवती च नृपामात्यौ च तयोः। पृथक्पृथग्द्वित्वविवक्षायां न बहुत्वम् अश्विनीत इत्यत्र"तसिलादिष्वाकृत्वसुचः"इत्यनेन पुंवद्भावे प्राप्ते उक्तपुंस्कत्वाभावान्न स्त्रीप्रत्ययलोपः । अत्र योन्योर्वैरं लोकाज्ज्ञेयम्। गोव्याघ्रं गजसिंहमित्यादिना८॥

त्रियुग्मी रोहिण्यासह शिवयमर्क्षेन
रिसुरेश्रुतिस्वातीमित्रादितिगुरुकरां-
त्याःशिवशशिभम ॥ परं दैत्ये मृत्यु-
र्दनुजमनुजानामनिमिषैः सह स्वैरं
वैरं निर्ऋतितनयानां परिणये ॥९॥

अथ गणमैत्रीमाह–शिखरिणी । त्रयाणां युग्मानां समाहारस्त्रियुग्मी फल्गुनीद्वयम् आषाढद्वयं भाद्रपदाद्वयं चेति रोहिण्या सह रोहिणी चेत्यर्थः । शिवयमर्क्षे आर्द्राभरण्यौ अयं नक्षत्रनवको नरि मनुष्ये भवेत् । श्रुतिः श्रवणः स्वाती प्रसिद्धा मित्रोऽनुराधा अदितिः पुनर्वसुः गुरुः पुष्यः करो हस्तः अंत्यं रेवती अश्विनौ अश्विनी शशिभं मृगशिरः अयं नवकः सुरे देवे भवेत्। परं चित्रा ज्येष्ठा धनिष्ठा विशाखा मूल कृत्तिकाशततारकामघाश्लेषा इतीदं नवकं दैत्ये भवेत् । एवं गणत्रयम् । अस्य प्रयोजनमाह। मृत्युरिति। दनुजमनुजानां राक्षसमनुष्याणां मृत्युः । नृनार्यो रक्षोमानुषगणयोः सतोः मृत्युः स्य दित्यर्थः।निर्ऋतितनयानां राक्षसानाम् । अनिमिषैर्देवैः सह स्वैरमतिशयितं वैरं स्यात्।क्व परिणये विवाहे।अर्थाच्छेषाणां मित्रत्वम्॥९॥

चापाजौ वृषभेण कुंभमिथुनौ कर्केण मेषः स्त्रिया शैलाग्नीसविषेण कार्मुकहरी नक्रेण नित्यद्विषौ ॥ तद्वत्कुंभतुले झषेण वशगाः सिंहं विनान्ये नृणां तद्वोज्या जलचारिणो हरिवशाः सर्वे विना वृश्चिकम् ॥ १० ॥

अथ स्वाभाविकं राशिवैरं तथा वश्यमैत्रं चाह-

शार्दूलविक्रीडितं। चापाजौ धनुर्मेषौ वृषभेण सह नित्यद्विषौ नित्यविरोधिनौ चापेन अजेन वा सह वृषभो नित्यं शत्रुरित्यर्थः । एवमुत्तरत्रापि । कुंभमिथुनौ कर्कैण मेषः स्त्रिया कन्यया शैलाग्नी तुलामिथुनौ सविषेण वृश्चिकेन । शैलाग्नी इत्यत्र संख्यासंज्ञया तत्संख्यौ राशी विवक्षितौ । अतो न बहुत्वम्। यथा निगमवाक्ये। " युग्माग्नियुगभूतानां षण्मुन्योर्वसुरंध्रयोः" ॥ इति । षण्मुन्योः षष्ठीसप्तम्याः वसुरंध्रयोरष्टमीनवम्याः एवमत्रापि । कार्मुकहरी धनुः सिंहौ नक्रेण मकरेण तद्वन्नित्यद्विषौ कुंभतुले झषेण मानेन एते द्विर्द्वादश षडष्टकयोर्मध्ये नित्यवैरिण उक्ताः । शेषाणां मैत्रम् । अत्रान्ये हेतुमाह । शत्रू मंदासितौ इत्यादि। सत्याचार्य मते यदीशपत्योः शत्रुत्वमस्ति त एवैते पठिताः शेषाः श्रेष्ठाः । तथा च तद्वाक्यम् । द्विर्द्वादशे । मेषझषौ वृषमिथुनावित्यादि षडष्टके च सिंहो मीनयुत इत्यादि। ग्रंथकारस्तु सत्याचार्यमतमैत्रमसहमानोऽमुं हेतुं परित्यज्य राश्योरेव वैरं नित्याद्विषावित्यनेनावदत्। नतु तदधिपतिवशतेति ग्रंथकारस्याशयः। अथ वश्यमैत्रं वशगा इत्यादि सिंहं विनाऽन्ये सर्वे राशयः नृणां मनुजानां तुलामिथुनादीनां वशगाः स्युः वशमधीनं गच्छंति ते तथा तेषां नृणां भोज्याः लभ्याः जलचारिणो मीनादयः स्युः हरेः सिंहस्य वृश्चिकं विना

सर्वे राशयः वशगाः स्युः शेषं वश्यावश्यं लोकप्रसिद्धे-र्ज्ञेयम् ॥ १० ॥

स्वाद्राशिमैत्री धुरि कुंभहर्यो: क-रग्रहस्तद्ग्रहविग्रहेपि ॥ तस्यामस-त्यां मृगराजमीनावप्यादृतौ तद्ग्रह-योः सुहृत्त्वे ॥ ११ ॥

अथैषां गुणदोषाणां निर्णयं विवक्षुस्तावत्तत्र किंचित्स्वकौशलं दर्शयति- उपजातिका।धुरि भारे मुख्येति यावत्।कुंभहर्यो: कुंभसिंहयोः राशिमैत्री स्यात्।समसप्तकत्वात्।तयोः राश्योः ग्रहौ स्वामिनौ शनिरवी तयोः विग्रहे वैरेपि करग्रहः स्यात्। तस्यां राशिमैत्र्यामसत्यां षडष्टकत्वान्मृगराजमीनौ सिंहमीनावप्यादृतौ करग्रहे गृहीतौ।तत्र हेतुः। कस्मिन् सति तद्ग्रहयोस्तत्स्वामिनोः गुरुसूर्ययोः सुहृत्त्वे मैत्रे सति।ग्रहमैत्रं सुरगुरुरित्यादिना वक्ष्यति।राशिमैत्रग्रहमैत्रयोरन्यतरलाभे शुभमिति तात्पर्यार्थः ॥ ११ ॥

पत्योर्विरोधे सति भृत्ययोः स्यान्मेलेप्यमेलस्तदलं भमैत्र्या ॥ अत्रोच्यते किं न मिथो वधः स्यादेकस्य सेनानरयोर्विरोधात् ॥ १२ ॥

अथाक्षिपति—इंद्रवज्रा। पत्योः स्वामिनोर्विरोधे वैरे सति भृत्ययोस्तत्सेवकयोर्मेले सत्यपि अमेलममैत्रं स्यादिति लोकप्रत्यक्षम्। अतो ग्रहवैरे सति राशिमैत्रं न मुख्यमिति भावः।अत्रास्मिन्विषये उच्यते उत्तरं दीयते एकस्य राज्ञः सेनानरयोः सेनासंबंधिपुरुषयोर्मिथः परस्परं विग्रहाद्विरोधात् वधो घातः किं न स्यात् अपि तु स्यादेव अतो राशिमैत्रं मुख्यमित्युक्तम् ॥ १२ ॥

अपश्यति स्वामिनि तद्वधश्चेद्गृहेश्वराणां किमदृष्टमस्ति ॥ अतोधिकं चेत्प्रभुसख्यमेव ततो गतिः का समसप्तकस्य ॥ १३ ॥

अथ प्रत्युत्तरम्—उपेंद्रवज्रा । स्वामिनि अपश्यति सति तयोः सेनानरयोर्वधो मिथः स्यात्। स्वामिसमक्षं न स्यादेवेति । इति चेत्तर्हि गृहेश्वराणां राश्यधिपानां किमदृष्टमस्ति अपि तु तैः सर्वं दृष्टमेव देवतात्वात्। यत्तु दशमतृतीये इत्यादिना दर्शनादर्शनमुक्तं तत्तत्फलार्थमेव वास्तवं तु गृहेश्वराणां किमदृष्टमस्तीति। अतः कारणात्प्रभुसख्यं स्वामिमैत्रमेवाधिकमिति चेत् तदा समसप्तकस्य कुंभसिंहावित्यादिकस्य का गतिःक प्रश्नो गमनिकावा कथ्यतामिति ॥१३॥

स्वभावमैत्री सखिता स्वपत्योर्वशि-

त्वमन्योन्यभयोनिशुद्धिः॥परः परः पूर्वगमे गवेष्यो हस्ते त्रिवर्गी युगपद्युतिश्चेत् ॥ १४ ॥

सिद्धांतरूपां गतिमाह-उपजातिका।स्वभावमैत्र्यादिषु चतुर्षु मध्ये पूर्वपूर्वगमे पूर्वपूर्वालाभे सति परःपरः उत्तरोत्तरः गवेष्यः अन्वेषणीयः आदौ राश्योः स्वभावमैत्री समसप्तकादिका विलोक्या तदलाभे स्वपत्योः तद्राश्यधिपयोः सखिता तस्य ग्रहसख्यस्यालाभे वशित्वं राश्योर्वश्यत्वं वश्या लाभेन्योन्यं भयोर्नक्षत्रयोर्योनिशुद्धिः योनिवैराभावः चेत् युगपद्युतिश्चतुर्णामपि लाभस्तदा हस्ते त्रिवर्गी स्यात्'त्रिवर्गो धर्मकामार्थैः' इत्यमरः । धर्मादयः करगताः स्युरिति । एवं पूर्वपूर्वस्यैकस्य अलाभे सति उत्तरोत्तरलाभेन तदपवाद उक्तः चतुर्णामपि लाभेतिशुभं त्रयाणां द्वयोर्वा लाभे तारतम्यं कल्प्यम् ॥ १४ ॥

आपार्श्वकेंद्रद्वयगाः प्रसूतौ तत्कालमित्राणि मिथः खपांथाः॥ न्यूनामपिस्त्रीनरभृत्यराज्ञां तत्कालसंख्य विशिनष्टि मैत्रम् ॥ १५ ॥

अथ स्वाभाविकग्रहमैत्रस्यापि तत्कालसख्येन न्यूनाधिकतामाह - इंद्रवज्रा । प्रसूतौ जन्मकाले

यस्माद्ग्रहात्पार्श्वयोः केंद्रद्वयं पार्श्वकेंद्रद्वयं तन्मर्यादीकृत्येत्यापार्श्वकेंद्रद्वयं तत्र गच्छंति ते आपार्श्वकेंद्रद्वयगाः खपांथाः ग्रहाः।खे आकाशे पथंति गच्छंति ते खपांथाः तेन ग्रहेण सार्धं मिथो मित्राणि स्युः। एतदुक्तं भवति। जन्मकाले यस्मिन्राशौ यो ग्रहः स्थितस्तस्मात्पृष्ठवर्ति केंद्रं दशमस्थानं भवति। अग्रतश्चतुर्थं तदवधित्वेन तदंतर्वर्तिस्थानानि दशमैकादशद्वादशद्वितीयतृतीयचतुर्थानि एष्वन्यतमस्थाने स्थितौ ग्रहौ तौ तत्कालं मिथो मित्रे स्तः। अन्ये तु शत्रव इति। तथाच वराहः।"तत्कालेन दशायबंधुसहजस्वांत्येषु मित्रं स्थित"इति। प्रसूतिग्रहणं तत्कालसंख्यस्य जातकशास्त्रोक्तेः। अतोऽन्यत्रापि तद्विलोक्यमिति ज्ञेयम्। तदेवाह। न्यूनामपि। स्त्रीनरौ च भृत्यराजानौ च तेषां स्त्रीनराणां भृत्यराज्ञां च ग्रहवशेन या स्वाभाविकी मैत्री ताम्। एतत्कालसंख्यं विशिनष्टि विशेषयति। कथंभूतामपि न्यूनामपि किं पुनः संपूर्णाम्॥ तथा हि। स्वाभाविको यो मित्रं समः शत्रुर्वा स चेत्तत्काले मित्रं भवति तदा क्रमेणाधिमित्रं मित्रं समः स्यात्। चेत्तत्काले शत्रुस्तदा समः शत्रुरधिशत्रुरिति॥ १९॥

षट्कर्मणां शासितदेवदैत्यौ राजन्यकस्याधिपती कुजार्कौ॥ विट्छू-

द्वयोश्चंद्रबुधौ शनिश्च संकीर्णपः स्त्री-
नृषु वर्णमैत्री ॥ १६ ॥

अथ वर्णमित्रमाह । इंद्रवज्रा । यजनयाजनादीनि षट्कर्माणि तानि येषां ते षट्कर्माणः विप्राः तेषाम्।शासितदेवदैत्यौ अधिपौ स्तः । शासिताः शिक्षिताः देवदैत्या याभ्यां तौ गुरुशुक्रावित्यर्थः । राजन्यानां क्षत्रियाणां समूहो राजन्यकं तस्याधिपती कुजार्कौ स्तः। विट्छूद्रयोः क्रमेण चंद्रबुधौ विशां चंद्रः शूद्राणां बुध इति । संकीर्णानां संकरभवानां निषादादीनां पतिः शनिः स्त्रीनृषु वधूवरेषु वर्णमैत्री स्यात्।तद्यथा। राश्यधिपयोर्वर्णौ विलोक्यौ। तत्रोत्तमवर्णः पुरुषः शस्तः समवर्णो मध्यः हीनवर्णोऽधम इति । एतदुक्तं ग्रंथकृता स्वदेशप्रसिद्धेः । अन्यदेशे तु मीनाद्ब्राह्मणपूर्वा वर्णाः कन्योत्तमो वरः श्रेष्ठः मध्यस्थः समवर्णो नीचो हीनोद्भवः पुरुष इति । इयं वर्णमैत्री केवलं गुणमात्राय न तु मेलकनिर्णयाय । अतो मेलकनिर्णयानंतरमेवोक्ता ॥ १६ ॥

सुरगुरुर्ज्ञगुरू कविकोविदौ विरवयो
विकुजा विरवींदवः ॥ अशशिसूर्य-
कुजाः सुहृदो रवेर्यवनयुक्तिरियं न
यवीयसी ॥ १७ ॥

एवं राशिकूटमुक्त्वा तदुपयोगिग्रहमैत्रं जातकोक्तमत्राह । एतदारभ्य श्लोकाष्टकं द्रुतविलंबितम् । रवेः रविमारभ्य एते सुहृदः स्युः। अर्थादन्ये शत्रवः। रवेः सुरगुरुर्मित्रम् अन्ये शत्रवः। चंद्रस्य बुधगुरू मित्रे शेषाः शत्रवः। भौमस्य शुक्रबुधौ मित्रे अन्ये शत्रवः । बुधस्य रविव्यतिरिक्ता मित्राणि रविः शत्रुः । गुरोः कुजव्यतिरिक्ता मित्राणि कुजः शत्रुः। शुक्रस्य रवींदुव्यतिरिक्ता मित्राणि रवींदू शत्रू। शनेः शशिसूर्यकुजव्यतिरिक्ता मित्राणि शशिसूर्यकुजाः शत्रवः। इयं यवनाचार्याणां युक्तिर्न यवीयसी न कनिष्ठा। 'स्थूलदूरयुवे' ति यवादेशः। यवनाचार्यमतमिदं महदित्यर्थः॥ १७॥

इदमुदीर्य वराहविरोचनो निजमतेऽपि न दूषितवान्पुनः॥ स बहु मन्यत एव यथातथं जयति शास्त्रमिदं यवनेष्वपि॥ १८॥

कथमिदं महादिति संस्थापयति। विरोचनः सूर्यः मिहिरोऽपि सूर्यः अतो वराहमिहिरः इदं यवनमतं निजमते बृहज्जातकादावुदीर्य उक्त्वापि न दूषितवान्। पुनर्वाक्यालंकारे । अन्यमतं स्वमते न हि निवेश्यं यदि निवेशितं दूषितव्यं तर्हि नो चेत्तर्हि

तत्संमतमेवेति न्यायविदः । वक्ष्यति च । अतः कारणात्स वराहः इदं ग्रहमैत्रीशास्त्रं यवनेषु यथातथं सत्यं बहु अतिशयितं जयति सर्वोत्कर्षेण वर्तत इति मन्यत एव । वराहोऽपि यवनशास्त्रं याथार्थ्येन अतितरां मन्यत एवेत्यर्थः ॥ १८ ॥

परमतं स्वमते विनिवेशितं यदि न दूषितमादृतमेव तत् ॥ कलितकेवलसत्यमतः स तद्यवनयुक्तिषु नूनमनिःस्पृहः ॥ १९ ॥

एतदेव भंग्यंतरेणाह । यस्मात्कारणात्स्वमते स्वमतमध्ये निवेशितं निक्षिप्तं परमतं यदि न दूषितं तदा तन्मतमादृतं स्वीकृतमेवेति न्यायविदः । तत्तस्मात्कारणात् नूनमित्यहं तर्के । इतीति । कथं स वराहः कलितकेवलसत्यमतः।कलितं लक्षितं केवलं साकल्येन सत्याचार्यस्य मतं येन स तथा । यवनपंक्तिषु यवनाचार्यवचनेषु अनिःस्पृहः निर्गतः स्पृहाया निःस्पृहः न निःस्पृहोऽनिःस्पृह इति । वराहोपि सत्याचार्यमतं सम्यगालोच्यापि यवनमतं स्पृहयत्येवेत्यहं तर्के इत्यर्थः ॥ १९ ॥

किमबहुत्वमयं मिहिरो दिशन्ग्रहसुहृत्त्वमिदं जगृहे हृदि ॥ उभयथापि

समं सति तन्मते महति केऽपि भवे-
म वयं यतः ॥ २० ॥

एवं चेत्तर्हि वराहो यवनमते अल्पमतत्वं कथमुक्तवानित्याशंक्याह । अयं मिहिरो वराहमिहिरः इदं यवनोक्तं ग्रहसुहृत्त्वं ग्रहमैत्रमादिशन्सन्न- बहुत्वमबहूनां मतमिति हृदि मनसि किं जगृहे धृतवान् । यवनग्रहमैत्रमुक्त्वा केषांचिदेवं मतमिति कथमुक्तवानित्यर्थः । तथा च तद्वाक्यम् । 'जीवो जीवबुधौ सितेंदुतनयौ व्यर्का विभौमाः क्रमाद्वींद्वर्का विकुजेंदवश्च सुहृदः केषांचिदेवं मतम्'इति।अतो यवनमैत्रमबहुसंमतमिति वराहस्याभिप्राय इति भावः। अत्रोत्तरम्।उभयथेति।तन्मते तस्य वराहस्य मते महति पृथुतरे सति उभयथा उभयपक्षेऽपि समं तुल्यं स्यात् । यतो यस्मात्कारणाद्वयं केचन केऽपि भवेम स्याम।वराहमतं महच्चेत्तर्हि वयमपि महांतो भवामेत्युभयत्र समम्।उभयोरपि मानुषत्वादितिभावः॥२०॥

बहुतरैः कृतमेव कृती स चेदनुसस-
र्ति तदप्ययथातथम् ॥ पृथगपि द्वि-
गुणे त्रिगुणे सकृत्त्रिगुणमित्यबहूक्ति-
रियं यतः ॥ २१ ॥

एतन्निरस्य पुनः संस्थापयति । स कृती कुशलो

वराहः बहुतरैर्भूयिष्ठैर्यत्कृतं तदेव अनुससर्ति अनुसरति।बहुमतानुसारमेव वक्तीत्यर्थः। सृ गतौ अयं धातुपाठे वैदिकधातुपाठे वैदिकधातुष्वेव बह्वादिषु पठितः।भाषायां तु भ्वादिष्वेव अतोऽनुससर्तीति छंदस्येव घटते।भाषायां तु सरतीत्येव। यङ्लुकि तु ससर्तीति। तस्मादयं कविप्रमाद एव।अतोत्रेदं पठितव्यम् अनुससार। तदप्ययथातथमिति। इति चेत्तदपि अयथातथं सत्यं न भवति।अत्र हेतुः।पृथगिति।यतःपृथगपि द्विगुणे त्रिगुणे प्राप्ते सकृत्त्रिगुणमिति यदुक्तं सा अबहूक्तिःअबहूनामुक्तिः सा। यथा वर्गोत्तमस्वराशिद्रेष्काणनवांशके सकृद्द्विगुणं वक्रोच्चयोस्त्रिगुणितं द्वित्रिगुणत्वसकृत्त्रिगुणमिति वर्गोत्तमादिष्वन्यतमगते वक्रोच्चयोरन्यतरगते च गृहे सति तस्यायुषः पृथग्द्विगुणस्य त्रिगुणस्य च प्राप्तौ एकवारमेव त्रिगुणं तदायुः कार्यमिति वराहेण यदुक्तं तन्न बहुसंमतमतो वराहोक्तमपि न बहुसंमतमिति भावः। तथा चोक्तं कल्याणवर्मणा।'बहुताडनसंप्राप्तौ यां करोत्येकवर्गणाम्॥वराहमिहिराचार्यः सा न दृष्टा पुरातनैः॥'इति।अतो वराहोपि बहुसंमतमेव वक्तीति न किं तु कदाचित्स्वमनोरुचितमपि वक्तीत्यतो यवनोक्तग्रहमैत्रविषये केषांचिन्मतमिति वराहेणोक्तेपि तद्वाक्यस्याप्रामाण्याद्यवनोक्तमेव ग्रहमैत्रं महदित्यर्थः। एतन्नवांशचिंताव्याजेनापि सम्यक् संस्था-

पयिष्यति एतद्ग्रंथकृतः स्वपक्षस्थापनार्थं पांडित्यमात्रं वास्तवं नैतदिति वयं ब्रूमः। यत उक्तं वराहेण बृहज्जातके " सत्योपदेशो वरमत्र किंतु कुर्वंत्ययोग्यं बहुवर्गणाभिः ॥ आचार्यकत्वं तु बहुघ्नतो यामेकं तु यद्भूरि तदेवकार्यम् " इति । अत्रैवं मतभेदे सति सत्योपदेशो वरं तर्हि किंतु अन्ये स्वतुंगवक्रवर्गोत्तमस्य गृहादिगते ग्रहे सति बहुवर्गणाभिर्यदायुः कुर्वंति तदयोग्यम् अनवस्थादोषप्रसंगादिति भावः । आचार्यस्य कर्म आचार्यकं तस्य भावः आचार्यकत्वम् ।आचार्यस्य सत्याचार्यस्यायमभिप्राय इत्यर्थः । बहुवर्गणायां प्राप्तायां सत्यां यदेकमधिकं वर्गणं तदेव कार्यमिति।तद्यथा। उच्चगतस्य उच्चगणो रूपत्रयं, वक्रगतस्य चेष्टा गुणोपि रूपत्रयं, तत् घातमूलं स्फुटगुणोपि रूपत्रयं, वर्गोत्तमस्वगृहादिगते आश्रयगुणोपि रूपत्रयासन्नः तत्स्फुटगुणयोर्घातमूलं कर्मगुणोपि रूपत्रयम्।अतः उच्चवक्रवर्गोत्तमस्वगृहे द्रेष्काणादिगतेऽपि सकृत्त्रिगुणमित्येव। अतो वराहेण गर्गसत्यादिमतानुसारेण यदुक्तं तद्युक्तियुक्तं बहुमतं चेति । अतो ग्रंथकृता बहुतरैः कृतमेवेत्यादि यदत्रोक्तं तन्न विचारणीयमिति ॥ २१ ॥

अभिदुरावधिपौ सृजतः शुभं शशिनवांशकयोरिति देवलः॥ तदपि चा-

रु न चारुषितैर्मुखैर्व्यवहरन्ति तथा वितथाशयाः ॥ २२ ॥

एवं राशिसख्यं प्रसंगेनोक्त्वा इदानीं नवांशसख्यस्यापि ग्राह्यत्वप्रतिपादितत्वात्तत्कथं नोक्तं तद्विषयमाह। जन्मकाले शशिनवांशयोश्चंद्रगतनवांशयोः अभिदुरौ न भिदुरं ययोस्तावभिदुरौ सुहृदौ। भिदेर्भावे कुरच्। अधिपौ शुभं सृजतः कुरुत इति देवलो मुनिः प्राह। तदपि चारु रमणीयं तत्कालमीमांसयैव प्रतिपादितं तथा तेन प्रकारेण जनाः वितथाशया न व्यवहरंति वितथमसत्यमाशयो येषां ते तथा असत्याभिप्रायाः। कैः आ ईषत् रुषितैःकुपितैर्मुखैः अयुक्तं मनसि स्वीकृत्य किंचित्कुपितमुखैर्न व्यवहरंतीत्यर्थः। यद्वा अवितथाशयाः यथार्थमनोभावाः मनस्येवमेवास्ति परंतु तादृशैर्मुखैस्तथा न व्यवहरंति। लोके अप्रसिद्धिभयादिति भावः ॥ २२ ॥

लवदृशैव हि लग्नदृशं विना फलममसंत येऽपि करग्रहे॥शशिनवांशसखित्वपराङ्मुखाः किमलमस्तु गतानुगतं जगत् ॥ २३ ॥

एवं देवलादिमते सत्यपि ये नवांशसख्यव्यवहारं न कुर्वंति तेषामनिष्टमाह। ये दैवविदः

करग्रहे लग्नदृशं विना लवदृशा नवांशदृष्ट्यैव फलममंसत लुङि मन्यंते स्म। तेऽपि शशिनवांशसखित्वे पराङ्मुखाः किं स्युः। तथा हि ' उदयगतनवांशः स्वेशदृष्टे युतो वा न भवति यदि मृत्युः स्यात्तदानीं वरस्य' इत्यादीनि नवांशदृष्ट्यैव लग्नफलं मन्यन्ते । लग्नफलं नवभागे इत्यंशस्य मुख्यत्वात्त एव मेलकार्थे चंद्रनवांशयोः सख्यं कथं न मन्यंत इति तेषामनिष्टम्। अथेदमलमस्तु दूरं तिष्ठतु तत्कथं जगद्विश्वं गतानुगतं गतमनुगतं गतानुगतं 'गतानुगतिको लोको न लोकः पारमार्थिकः' इति कश्चिदित्यज्ञानाद्व्यवहरत् तथैवान्यस्तद्वदन्योपीत्यंधपरंपरावदिति भावः ॥ २३ ॥



इति विवाहवृंदावने मेलकाध्यायस्तृतीयः ॥ ३ ॥

इति श्रीसकलागमाचार्यश्रीकेशवसांवत्सरात्मजगणेशविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां मेलकाध्यायस्तृतीयः ॥ ३ ॥

## अथ नवांशचिन्ताध्यायः ॥

नवलवाधिपती उदयास्तयोरनिमिषार्चितचांद्रमसायनौ ॥ वरपतिंवर-

योःसमवैरिणौ यदि तदिष्टफलेष्वपि फल्गुता ॥ १ ॥

अथ सूक्ष्मं लग्नादिफलं विवक्षुस्तावन्नवांशचिंतां निरूपयति । तत्रादौ करग्रहोक्तनवांशोपपत्तिव्याजेन यवनोक्तग्रहमैत्रं संस्थापयति।तथा हि।लग्नं किल भर्तृस्थानं तत्रत्यो नवांशो पि सप्तमं जायास्थानं तन्नवांशश्च तयोः सख्ये वरवध्वोः सख्यं अतत्सूक्ष्मयोरुदयांशास्तांशयोः स्वामिवशात्सख्ये सति वधूवरयोरपि मैत्रं स्यात् । अतो येषां नवांशानामेवं घटते त एव नवांशास्तुलाधरादयः पूर्वैः पठितास्ते एव यवनोक्तग्रहमैत्रस्यैव स्वीकाराद्घटंते । अतो यवनोक्तमेव ग्रहमैत्रं प्रमाणमिति सिद्धांतं मनसि मत्वा पूर्वोत्तरपक्षौ रचयति । नवलवेत्यादिना श्लोकषट्केन । अत्राध्याये सर्वाणि द्रुतविलंबितानि । उदयास्तयोर्लग्नतत्सप्तमगतयोर्नवलवयोरधिपती अनिमिषार्चितचांद्रमसायनौ यदि स्तः । अनिमिषा देवाः तैरर्चितः बृहस्पतिः चंद्रमसोनंतरापत्यं चांद्रमसायनो बुधः । नैतच्चतुरस्रम् । अनंतरापत्ये फकोऽविधानात् ।किंचिदपत्यमात्रेऽपि अणादीनिच्छंति तदपि न नडादिष्वपाठात् पृथग्विधानादर्शनाच्च । एवं सति तस्येदमित्याद्यपि निरस्तम् । यत्तु प्रायश्चित्तस्मृतौ चांद्रायणमिति प्रयोगः । तदेवं व्युत्पादितं चंद्रस्य अयनमिवायनं

चरणं यस्मिन्कर्मणि तच्चांद्रायणम् । संज्ञायां दीर्घः । एवं सोमायनादि । अतो ग्रंथकृता अनंतरापत्ये चांद्रमसायना इति प्रयुक्तस्य गतिमात्रं चिंत्यते । चंद्रमस इदं चांद्रमसम् अयनमुत्पत्तिस्थानं यस्यासौ चांद्रमसायनो बुधः।तौ गुरुबुधौ यदि समवैरिणौ स्तः तत्तदा वरपतिंवरयोर्वरवध्वोः।पतिं वृणुते सा पतिंवरा। 'संज्ञायां भृतॄवृजिधारिसहितपिदम'इति खः । खित्त्वान्मुम् । इष्टफलेषु शुभफलेषु फल्गुता निष्फलता स्यात् । एतदुक्तं भवति । लग्ननवांशः किल वरस्य स्थानं तत्सप्तमांशो वध्वाः अतस्तदधिपयोर्मैत्रे सति तयोः शुभम्।तत्र यदा लग्ने धनुरंशः तदा सप्तमे मिथुनांशः अनयोरधिपती गुरुबुधौ तौ सत्याचार्यमते शत्रू मंदसितावित्यादिना मिथः समवैरिणौ भवतः । अतोऽत्र वरवध्वोः शुभं न स्यात् ।तस्माद्धनुरंशो न ग्राह्य इत्यनिष्टं प्राप्तम् ॥ १ ॥

तदुदयद्विपदांशनियामको यवनसौहृदमाद्रियतां जनः ॥इतरथा कथमस्तु करग्रहस्तनुफलं हि लवानवलम्बतः ॥ २ ॥

अतो यवनमैत्रं ग्राह्यमित्याह । तत्तस्मात्कारणाज्जनो यवनसौहृदं यवनोदितमैत्रमाद्रियतां स्वीकुरुताम् ।

द्द गतौ तुदादिः कर्त्तरि लोट् । सौहृदमित्यस्य गतिः प्रागवत् । कथंभूतो जनः उदयद्विपदांशनियामकः । उदये लग्ने द्विपदांशो नरराश्यंशस्तं नियच्छतीति तथा । कर्तरि वुण् । लग्ने द्विपदांशस्वीकारं नियममिव न मैत्रं ग्राह्यमित्यर्थः । अन्यथात्वे दोषमाह । इतरथेति।इतरथा द्विपदांशानंगीकारे करग्रहः कथमस्तु अपितु मास्तु । तत्कथं हि यस्यात्कारणात्तनुफलं लग्नफलं लवान् अवलंबते आश्रयते लवाधीनं लग्नफलमिति।अयंभावः।'लग्नफलं नवभागे'इत्युक्तत्वान्नवांशो मुख्यः स च द्विपद एव भाव्यः।तथा चोक्तम् । "प्राग्लग्ने द्विपदगृहा कुर्यादन्यांशकोदयो नाशम् ॥ " इति । अतो द्विपदांशादन्यनवांशे वरवध्वोर्नाशविधानात्करग्रहः कथं स्यात् । अतो द्विपदांशनियमे सति उदयास्तांशाधिपयोर्मैत्र्या भाव्यं सा च धनुर्धरांशे यवनोक्त्या लभ्यते । अतो यवनोक्तमेव ग्रहमैत्रमाद्रियतामिति ॥ २ ॥

अथ रिपू यदि नो भयसप्तमौ तदयशः कलशस्य किमागतम्॥द्विपदतां दधतोथ शुभर्क्षता यदि वृषानिमिषौ किमुपेक्षितौ ॥ ३ ॥

अत्राप्यन्यस्याशंकामनूद्य दूषयति । अथ प्रकारां-

तरे। अथ उभयसप्तमौ न रिपू स्तः। समसप्तकयोः सदा राशिमैत्री अस्त्येव। चतुर्दशमवत्। अतो धनुर्मिथुनयोर्मैत्रं सदास्तीति यदीदं तदा कलशस्य द्विपदतां नरतां दधतो बिभ्रतोऽप्ययशः अशुभत्वं किमागतम्। कुंभे हि उत्तरार्धे मनुष्यः उदयास्तांशयोः सदा समसप्तकत्वान्मैत्रम्।अतः कुंभांशः कथं न गृहीत इति। अत्रोत्तरमशुभर्क्षतेति। अशुभर्क्षता पापग्रहभवनत्वं कुंभो हि पापग्रहभवनमतो नोक्त इति। अत्र प्रत्युत्तरम्। एवं चेत्तर्हि वृषानिमिषौ वृषमीनौ किमुपेक्षितौ कथं परित्यक्तौ वृषमीनौ सौम्यभवनत्वेऽपि कथं त्यक्ताविति ॥ ३ ॥

अमनुजाविति चेत्किमु शौनको न-
वलवं झषमादृतवान्मुनिः॥ शुभगृह-
द्विपदास्तलवः स चेद्भवतु तत्र किम-
स्तुतुलाभृतः॥ ४॥

अत्रोत्तरप्रत्युत्तराणि। तौ वृषमीनौ। अमनुजौ मानुषौ न भवतः। तदुदयद्विपदांशनियामक इत्युक्तत्वात्। इति चेत्तर्हि शौनको मुनिर्झषं मीनं नवलवं कथमादृतवान्स्वीकृतवान्। प्रहसितवदना च मीनांश इति। मीनो हि जलचरः कथं शौनकेन गृहीत इति। अत्रोत्तरम्। स मीनः शुभगृहद्विपदास्तलवः शुभगृहं

द्विपदश्च अस्तलवो यस्य स तथा मीनस्यास्तांशः कन्या असौ शुभग्रहं द्विपदश्च अतो मीनांशः शौनकेन आहत इति। अत्र प्रत्युत्तरम्। इति चेत्तर्हि तुलाभृतः किमस्तु। तुलाधारस्य हि अस्तलवो मेषः स शुभगृहद्विपदश्च न भवति। अतः कस्मात्तुलाधरः स्वीकृत इति ॥ ४ ॥

द्विचरणः शुभभं च नवांशकस्तदय-
मेकतरः परिगृह्यते ॥ इदमसंगतमंग
तवेरितं जगति नैकवशात्किल सौ-
हृदम् ॥ ५ ॥

अत्रोत्तरप्रत्युत्तरे। यद्येवमुक्तं त्वया न तर्हि अयमेकतरो नवांशो द्विचरणः शुभभं च परिगृह्यते। उदयनवांशास्तं नवांशयोरेकतरो नवांशो मनुजः सौम्यगृहं च गृह्यते। न तु द्वावपीत्यस्माकमाशयः। द्वयोरेकस्य निर्धारणे तरप्। तुलाभृतो हि अस्तांशो मेषः तयोस्तुलामेषयोरेकतरस्तुलाधरः असौ द्विचरणः शुभभं चास्ति अतस्तुलांशो गृहीत इत्यर्थः। अत्रोत्तरम्। अंगेत्यव्ययं संबोधने। हे तव ईरितमुक्तमिदमसंगतमघटमानम्। कस्मात्। किल यस्मात्कारणाज्जगति लोके एकवशात्सौहृदं नास्ति। सौहृदं हि उभयगतो धर्मः। स च कस्मिन्नेव न घटते। अत एकतरो

गृह्यते इति यदुदीरितं त्वया न तत्संगतमिति। ईरितमत्र भावे क्तः। तवेति शेषविवक्षायां षष्ठी। सौहृदमित्यस्य गतिः प्राग्वत्॥ ५॥

खचरयोः सखिता यदि कारणं ध्वनति सा नितरां यवनाध्वनि॥ कलशसिंहनवांशपशत्रुतापरिणमत्युभयोरपि शास्त्रयोः॥ ६॥

एवं सर्वविकल्पान्परिहृत्य परिशेषात्फलितंसिद्धांतमाह। खचरयोरुदयांशास्तांशस्वामिनोः सखिता मित्रत्वं कारणं वक्तव्यम्। विकल्पांतराणां निरासात्सा यदि कारणं स्यात्तर्हि सा सखिता यवनाध्वनि यवनमार्गे नितरामतिशयेन ध्वनति शब्दायते। यवनशास्त्रे प्रसिद्धेत्यर्थः। सत्याचार्यमते तु तयोर्मैत्र्यभावात्। अतो यवनमतमेव प्रमाणमिति भावः। ननु कुंभांशपरित्यागः सत्याचार्यमते वैरसद्भावादिति चेत्तत्राह। कलशेति। कलशसिंहौ च तौ नवांशौ च उदयास्तनवांशौ तौ पातस्तौ तत्पौ तदधिपती तयोः शत्रुता वैरत्वमुभयोर्द्वयोरपि शास्त्रयोः परिणमति परिपाकं प्राप्नोति। शनिसूर्ययोर्वैरं यवनशास्त्रे सत्यशास्त्रेऽप्यस्ति। अतो यवनमते शत्रुत्वसद्भावात्कुंभांशस्त्यक्तः। न तु सत्यशास्त्रवैरसद्भावादिति भावः।

एवमंशे ग्रहमैत्रादिकं विचार्यते तर्हि राशावपि कथं नावलोक्यत इत्याशंकां परिहरति ॥ ६ ॥

अथानयोः समसप्तसुहृत्पथः कथमसूक्ष्मगतिः स च नैकधा ॥ इह हि लग्नगतान्यनुमेनिरे तदखिलैः खलखेटगृहाण्यपि ॥ ७ ॥

अथेति। अथानंतर्यें। हि यस्मात्कारणात्तयोर्यवनसत्यशास्त्रयोः समसप्तसुहृत्पथः कथमसूक्ष्मगतिः अपि तु सूक्ष्मगतिरेव। समाश्च ते सप्त च समसप्त। सुहृदां पंथाः सुहृत्पथः। "ऋक्पूरब्धूःपथामानक्षे" इत्यप्रत्ययः । समसप्तानां सुहृत्पथः समसप्तसुहृत्पथः।वरवधूस्थानराश्योः सदा समसप्तकत्वादुभयमतेऽपि समसप्तकराश्योर्मित्रत्वमार्गः सूक्ष्म एवेत्यर्थः । स च सुहृत्पथः एकधा एकप्रकारो नास्ति तत्कालमैत्रादेरपि सद्भावात्।उक्तं हि न्यूनामपीत्यादिना। तत्तस्मात्कारणादिहास्मिन्विवाहे अखिलैः यवनादिभिः सत्यादिभिश्च खलखेटगृहाणि पापग्रहभवनानि मेषसिंहादीन्यपि लग्नगतानि अनुमेनिरे अनुज्ञातानि । अपिः संभावनायाम् । पापभवनान्यपि शुभानि किं पुनः शुभभवनानीत्यर्थः ॥ ७ ॥

इति तुलाजितुमप्रमदाधनुःप्रथमखंडमखंडफलं जगुः ॥ सततमस्तपति-

द्विपदीश्वरं नवलवं बलवंध्यपतिं त्यजेत् ॥ ८ ॥

अथ प्रकृतस्य सिद्धांतमाह—इत्युक्तहेतुभिः सिद्धं तुलाजितुमप्रमदाधनुष्प्रथमखंडं सततमनवरतमखंडफलं पूर्णशुभफलदं जगुर्यवनादयः । तुला प्रसिद्धा जितुमो मिथुनः प्रमदा कन्या धनुष्प्रथमखंडं धनुषः पूर्वार्द्धम्।द्वंद्वैकत्वम्।न खंडं फलं यस्य तत्तथा।तथाहि। धनुःपूर्वार्धकुंभोत्तरार्धमिथुनतुलाधरकन्याद्विपदाः किलोक्ताः तत्र धनुषोऽस्तांशो मिथुनः तत्स्वामिनोर्गुरुबुधयोर्यवनमते मैत्रम् । अतो धनुरंशः शुभः एवं मिथुनांशोऽपि । तुलाया अस्तांशे मेषः तत्स्वामिनोः कुजशुक्रयोः यवनमते मैत्रमतस्तुलांशः कुंभः कन्याया अस्तांशो मीनः तत्स्वामिनोर्गुरुबुधयोर्यवनमते मैत्रमतः कन्यांशः शुभः । कुंभस्यास्तांशः सिंहः तत्स्वामिनोर्मैत्राभावात्कुंभांशो न शुभः अत एव नवांशाः शुभा अखिलैरुक्ताः । तथा चाहुः । 'प्राग्लग्ने द्विपदगृहात्कुर्यादन्यांशकोदयो नाशम्।द्विपदेष्वपि कन्यातौलिमिथुनधन्वंशकाः शस्ताः ॥" इति । अयं ग्रंथकृतोऽभिप्रायः सप्रपंचं मया वर्णितः। पारमार्थिकत्वे तदर्वाचीनानां नयनावरणमात्रम् । तद्यथा । यत्त्वया सिद्धांतितं तुलादिषूक्तनवांशेषु उदया-

स्तांशाधिपयोः खचरयोः सखिता कारणमिति तर्हि मेषांशः तदधिपयोः सत्यपि मैत्रे कथं त्यज्यते। अशुभर्क्षत्वादिति चेत्तन्न।वृषांशस्य सत्यपि मैत्रे त्यागात् ।अमनुजत्वादिति च। तर्हि शौनकेन मीनांशः कथमादृतः शुभगृहद्विपदास्तलवः स चेत्तदपि न। तर्हि तुलांशः कथमाद्रियत इति त्वयैवोच्यते।उदयास्तांशयोरेकतस्तादृशो गृह्यत इति चेत्तदपि न॥ 'जगति नैकवशात्किल सौहृदम्'इति त्वयैवोपन्यस्तत्वात्।अथ चेत्तवेदमभिप्रेतम् । 'उदयद्विपदांशनियामक' इतितदपि न।'जगति नैकवशात्किल सौहृदम्'इति त्वयैव स्मारितत्वात्।अस्तांशोऽपि द्विपदो भाव्यः। अथ परिशेषात्प्राग्लग्ने द्विपदगृहात्कुर्यादन्यांशकोदयो नाशम् ।इत्यागमबलादिदमित्येव वक्तव्यं तर्ह्यस्माकं फलितं मनोभिलषितम् आगम एव कथं तुलांशादिषु कारणं तत्स्वीकर्तव्यः। किमर्थं कारणांतरं ग्रहमैत्रं कल्पनीयं कल्पनालाघवात्। शौनकेन मीनांशस्य अमनुजत्वेपि स्वीकाराच्च। अतो नवांशोक्त्या यवनमैत्रशास्त्रस्य संस्थापनं न संयुज्यते। किमनेन नवलवाधिपती इत्यादिना ग्रंथसंदर्भेण। अतएव वराहः ॥ 'ज्योतिषमागमसिद्धं विप्रतिपत्तौ न योग्यमस्माकम्॥ स्वयमेव विकल्पयितुं किंतु बहूनां मतं वक्ष्ये॥' इति। अतो वराहेण यवनमते केषांचिदेवं मतमित्युक्तं सत्यो-

कं ग्रहमैत्रं बहुमतमतः सर्वजनेषु प्रसिद्धतरं यवन-मैत्रं त्वेकदेशीयमतो महद्भिरुपेक्षितं किमर्थमत्र ग्रं-थकृतोभिनिवेशः किमपराद्धं च सत्यादिभिः ।उच्यते। ग्रंथकृद्भिः स्वगौरवार्थं किंचिदपूर्वं वक्तव्यं वृथैव म-हतामप्युक्तिः किंचिद्दूषणीयेत्यलं बहुक्त्या । अथैषा-मप्यंशानां विशेषमाह। अस्तपतीति । अस्तोऽस्तांशः तस्य पतिस्तस्य द्विषन् शत्रुः स ईश्वरो यस्य न-वांशस्य स तथा। उदयास्तांशाधिपयोस्तात्कालिक-शत्रुत्वे स नवांशस्त्याज्य इत्यर्थः । तुलादिषु हि उद-यास्तांशाधिपयोः स्वाभाविकशत्रुत्वाभावात् विशे-षांतरमाह । बलवंध्येति । बलेन वंध्यः पतिर्यस्य नवां-शस्य स तथा यस्यांशस्य पतिः स्थानादिबलैर्यदि हीन स्तदा तमपि त्यजेदित्यर्थः ॥८॥

लवपतिः कुरुते लवलग्नयोः पतिमृतिं
त्रिवसुव्ययवित्तगः॥नवलवास्तपतिः
प्रतिहंत्यसून्मृगदृशश्च तदस्तभयो-
स्तथा ॥ ९ ॥

अथोदयास्तशुद्धिमाह । लवपतिः लवलग्नयोस्त्रि-वसुव्ययवित्तगः पतिमृतिं कुरुते अंशाधिपतिरंशाल्लग्ना द्वा तृतीयाष्टमद्वादशद्वितीयस्थितो भर्तृमृतिं कुरुत इत्यर्थः। इयमुदयशुद्धिः ।अथास्तशुद्धिः ।नवलवेति।

नवलवादस्तं सप्तमं तस्य पतिः तदस्तभयोर्लवलग्नयोरस्तभे सप्तमभवने तयोः तथा तद्वत् त्रिवसुव्ययवित्तगः मृगदृशो वध्वा असून्प्राणान्प्रतिहंति नवलवात्सप्तमाधीशो नवांशसप्तमाल्लग्नसप्तमाद्वा त्रिवसुव्ययवित्तगस्तदा वधूं हंतीत्यर्थः। ननु पूर्वैर्यवनादिभिर्नवांशाधीशस्य नवांशदृष्टौ लग्नदृष्टौ च सत्यामुदयशुद्धिरुक्ता कथमत्रोक्तं त्रिवसुव्ययवित्तग इति। उच्यते। "षष्ठं द्वितीयभवनं द्वादशमेकादशं न पश्यंति। स्वस्थानाद्वीक्ष्यंते ग्रहास्तथान्यानि भवनानि" इत्यत्र ग्रहस्थानाद्यदेकादशं तस्माद्ग्रहस्तृतीय एव भवति। एवं यत्षष्ठं तस्माद्ग्रहोष्टम एव। यद्द्वितीयं तस्माद्द्वादशः यद्दशं तस्माद्द्वितीय इति। अतो यदुक्तं त्रिवसुव्ययवित्तग इति तद्ग्रहादर्शनमेवेति न विरोधः। अथान्यैः केवलमत्रादृष्टचैवोदयशुद्धिरुक्ता। "युतः स्वनाथेन विलोकितो वा नवांशको लग्नगतो नराणाम्॥निहंत्यनिष्टानि तथापमृत्युं कलत्रसंस्थश्च नितंबिनीनाम्" इति। तदलाभे लग्नदृष्टचा वा। "पश्येद्यदांशाधिपतिर्विलग्नं लग्नेऽथवा स्यादुदयांशशुद्धिः। अस्तांशनाथः स्मरभं विलग्नात्पश्येत्तदास्तांशविशुद्धिरुक्ता।" इति ॥ ९ ॥

उभयदृक्फलदा बलदार्ढ्यतो लवदृग्दृहते कियदूनताम् ॥ तदिह केव-

लवग्नदृशः फलं शकलितं कलितं यवनेश्वरैः ॥ १० ॥

अत्र तु लवलग्नयोरिति यौगपद्यमुक्तं तत्कथमित्याह। उभयस्या दृगुभयदृक् । नवांशस्य लग्नस्यापि या दृष्टिरित्यर्थः। सा फलदा स्यात् । कस्मात् बलदार्व्यतः बलस्य दृढत्वात् लग्नं हि शरीरमंशस्तु तदवयवरूपः उभयदर्शने सति सम्यक् फलमिति । अतो लवदृक् अंशदृष्टिः कियदूनतामुद्वहते धारयति । किं परिमाणमस्येति कियत् कियच्च तदूनं च तस्य भावः कियदूनता केवलमंशदृष्टिः किंचिन्न्यूनफलेत्यर्थः।तत्तस्मादतः कारणादिहास्मिन्विवाहे केवललग्नदृशः फलं शकलितमर्धितं यवनेश्वरैः कलितं लक्षितं शकलं संजातमस्येति शकलितम्। अंशदृष्टिं विना केवलाया लग्नदृष्टेः फलमर्धितं यवनैः प्रोक्तमित्यर्थः ॥ १० ॥

स्पृशति किं न कदाचिददृश्यतामवयवोऽवयविन्यवलोकिते ॥ अमतकेवललग्नदृशां न तन्मतमतर्कसहंसमुपास्महे ॥ ११ ॥

अमुमुक्तमेवार्थं युक्त्या दृढयति । यस्मात्कारणात् अवयविनि विलोकिते सति अवयवः कदाचिददृश्यतां किं न स्पृशति। अपि तु अवयविन्यवलोकि-

तेऽपि कदाचिदवयवोऽप्यदृश्यतां स्पृशत्येवेति । द्वौ नौ प्रकृतार्थं ब्रूतः । दृष्टेऽप्यवयविनि कदाचित्कश्चन तदवयवो न दृश्यत इत्यर्थः । तत्तस्मात्कारणाद-मतकेवललग्नदृशां न मता केवला लग्नदृग्येषां तेषां मतं न अतर्कसहम् । अपि तु तर्कसहमेव तर्कं सहते तत्तर्कसहं वयं समुपास्महे अनुसरामः । येषां केवल-लग्नदृष्टिर्न संमता अपि तु उभयदृक् संमता तेषां मतं तर्कसहं तद्वयं मन्यामह इत्यर्थः । यदुक्तं 'उभ-यदृक्फलदा' इति तत्र केवललग्नदृष्टिं मन्यमानः पर आक्षिपति ॥ ११ ॥

ननु नवांशकमंशपतिर्निजं कलयती
हविलग्नविलोकने।यमवलोकयते स
तनोः पृथग्यदि तदिष्टफलाय जलां-
जलिः ॥ १२ ॥

ननु इत्यहो । इह विवाहे । अंशपतिर्लग्नविलोकने सति निजं नवांशं कलयति पश्यति तस्य लग्नांतत्वा-त् । अन्यथात्वे अनिष्टमाह । यमवलोकयत इति । नवांशपतिर्यं नवांशमवलोकयते स यदि तनोः सका-शात्पृथगस्ति तदा तदिष्टफलाय तस्य लग्नस्य इष्टफलं तवापि संमतं तस्मै जलांजलिः स्यात् । जलां-जलिदानं मृतस्यैव । अतो लग्नफलं गतमेवेत्यर्थः ।

'तनुफलं हि लवानवलंबते' इति तवापि संमतं नवांशाधीनं लग्नफलमिति तस्य भञ्जनमेव स्यादित्यनिष्टप्रसंजनम् ॥ १२ ॥

अपृथगस्ति सचेन्ननु पश्यता तनुमसावधिपेन निरूपितः ॥ हृदयहारदृशेव मृगीदृशःप्रणयिना तरलस्तरलद्युतिः ॥ १३ ॥

अत्राप्यनिष्टमुभयदृष्टिं मन्यमानः स्वयमाह । ननु अहो स नवांशश्चेदपृथगस्ति लग्नांतर्गत एवास्ति तदा तनुं लग्नं पश्यता अवलोकयता अधिपेन लग्नस्वामिना असौ नवांशो निरूपितो दृष्ट एव स्यात्। रूप अवलोकने चुरादिः। केन क इव। प्रणयः प्रीणनं तदस्यास्तीति प्रणयी प्रियः तरलो हारमध्यमणिः कथंभूतेन प्रणयिना मृगीदृशः अंगनाया हृदयहारदृशा हृदये हारस्तं पश्यतीति हृदयहारदृक् तेन तथाकथंभूतो मध्यमणिः तरलद्युतिः तरला चंचला द्युतिर्यस्यासौ तथा प्रियेणांगनाया हारे दृष्टे सति तदंतर्गतो मध्यमणिर्दृष्ट एवेति। तथा लग्नं पश्यता तदाधिपेन तदंतर्गतो नवांशोऽपि दृष्ट एवेत्यर्थः।अतो नवांशपतिना नवांशो द्रष्टव्य इति यत्त्वयोच्यते तद्व्यर्थमित्यनिष्टप्रसंजनम् । अतश्च प्रागुक्तकालमीमांसनाच्च

नवांशपतेर्लग्नदृष्टिस्तदंतर्गतनवांशदृष्टिश्च विलोक्येति सिद्धम् । ननु लग्नपतिना लग्नं द्रष्टव्यमस्तपतिनास्तलग्नमित्येतदपि केषांचिन्मतमस्ति तदपि दूषयति ॥ १३ ॥

तनुपतिस्तनुमस्तमथास्तपो यदि न
पश्यति नश्यति तत्कृतम्॥ इति परः
परमत्र मते पतेल्लवतरौ च तु रौद्र इ-
वाशनिः ॥ १४ ॥

यदि तनुपतिस्तनुं न पश्यति अथ अस्तपो लग्नात्सप्तमाधीशो स्तं लग्नात्सप्तमं न पश्यति तदा तत्कृतं लग्नकृतमस्तलग्नकृतं च शुभं न पश्यति इति परः कश्चिदाह । बत अहो अस्मिन्मते लवतरौ लवतरुरिव तरुस्तस्मिन्रौद्र उग्रः शाणोद्धृष्टः अशनिः खड्गः परं पतेत् । परमित्यव्ययमुत्कृष्टार्थे । अस्मिन्मते नवांशवृक्षोपरि अत्यर्थं रौद्राऽशनिपातो भवेन्नवांशफलोच्छेद इत्यर्थः ॥ १४ ॥

जननलग्नभयोर्मृतिशासितुर्मृतिगत-
स्य च राशिनवांशकाः ॥ तनुगता
यदि तत्तनुते वधूरतिलका तिलका-
य जलांजलिम् ॥ १५ ॥

एवं सयुक्तिकामुदयास्तशुद्धिमुक्त्वाधुना जन्मराशिलग्नाभ्यामंशशुद्धिमाह । लग्नं च भं च लग्नभे जनने लग्नभे जन्मलग्नजन्मराशी तयोर्मृतिशास्तितुः अष्टमस्थानाधिपतेः मृतिगतस्य ताभ्यामष्टमास्थितग्रहस्य च राशीनां नवांशकाः यदि विवाहकाले तनुगता लग्नस्थिताः स्युः तदा वधूरतिलका अभर्तृका सती तिलकाय भर्त्रे जलांजलींस्तनुते विस्तारयति ददातीत्यर्थः । तिलकः शृंगारकतिलकः नास्ति तिलको यस्याः सा अतिलका विधवेत्यर्थः । तिलक इव तिलकस्तिलकः भर्त्तेति यावत् । मृतभर्त्रे स्वयमेवांजलिदा । अनेन वध्वा अनपत्यतापि सूचिता । एतदुक्तं भवति । कस्यचिज्जन्मलग्नं वृषः जन्मराशिः कर्कः । तयोरष्टमभवने धनुर्धरकुंभौ तयोरधिपती गुरुशनी । एतौ नित्यौ कदाचित्तत्र धनुषि कुंभे वा कश्चन ग्रहः स्थितः स चेच्छुक्रः तेषां गुरुशनिशुक्राणां राशयो धनुर्मीनमकरकुंभतुलावृषाः एष्वन्यतमस्य नवांशो यदि तस्य विवाहे लग्नगतो भवति तदा परिणीता स्त्री अनपत्या विधवा भवेदिति । एवं वध्वा अपि जन्मलग्नाज्जन्मराशेश्च ॥ १९ ॥

व्यलिवृषं ननचर्क्षविलग्नयोर्भवनमष्टममभ्युदितं त्यजेत्॥सितपुलस्ति-

मतेन तदीशता तनुसमेति समेति
न दूषणम् ॥ १६ ॥

अथाष्टमलग्नदोषं तदपवादं चाह । जननर्क्षविलग्नयोर्जन्मराशिजन्मलग्नयोरष्टमं भवनमभ्युदितमुदयं गतं विवाहे त्यजेत् । जन्मराशेर्जन्मलग्नाद्वा अष्टमं लग्नं त्यजेदिति तात्पर्यार्थः । कथंभूतं व्यलिवृषं वृश्चिकवृषव्यतिरिक्तं वृश्चिकवृषावष्टमावपि न त्याज्यावित्यर्थः । अत्र हेतुमाह । सितपुलस्तीति । तयोरलिवृषयोरीशता स्वामिता तनुसमायोर्हि लग्नाधिपतिः स एव अनयोरिति इति हेतोः सितपुलस्त्योर्मते दूषणं न समेति न संगच्छते तनुरिति राशेरप्युपलक्षणम् । एतदुक्तं भवति । वृश्चिकोष्टमो मेषस्यैव भवति यो वृश्चिकस्याधिपः सएवमेषस्य एवंवृषोष्टमस्तुलाया एव तयोरधिपतिरेक एव अत एकाधिपतित्वात् वृषवृश्चिकयोरष्टमत्वे न दोष इति।केचित्सुहृत्त्वेपि न दोषमाहुः । झषकुलीरवृषालिमृगांगनाजननराशिविलग्नमहाष्टमा॥ शुभफला भृगुणाकथितास्तयोरधिपती सुहृदौ हि परस्परमिति ॥ १६ ॥

चरलवं चरवेश्मगमुत्सृजेन्मृगतुला
धरगे मृगलक्ष्मणि ॥ युवतिरत्र भवे
त्कृतकौतुका मदनवत्यनवत्यजनो
न्मुखी ॥ १७ ॥

अथ चरत्रयसंनिपातदोषमाह । चरलवं चरनवांशंचरवेश्मगंचरराशिलग्नस्थितमुत्सृजेत् परित्यजेत् कस्मिन्सति मृगलक्ष्मणि मृगतुलाधरगेसति मृगः शशः लक्ष्मलांछनं यस्यासौ तथा तस्मिश्चंद्रेमकरस्थे तुलास्थेवेति चरामेषकर्कतुलामकराः तत्र कर्कमेषस्थिते चंद्रे विवाहनक्षत्राभावात् मृगतुलाधरग इत्युक्तम् । अत्र फलमाह । युवतिरिति । अत्र योगे कृतकौतुका युवतिः मदनवतीसती अनवत्यजनोन्मुखी भवेत् कौतुकं विवाहकंकणं कृतं कौतुकं यस्याः सा तथा विवाहितेत्यर्थः । न नवः अनवः पुरातनस्तस्य त्यजनंतत्रोन्मुखी उत्सुका मदनार्त्ता सती पूर्वभर्तृपरित्यागे उत्कंठिता परपुरुषगामिनीत्यर्थः । केचित्तुवर्गोत्तमे सति नैषदोष इत्याहुः।वर्गोत्तमे वरगृहे न चरो नवांश इति अतएवाहुरन्येपि । 'कर्कलग्नेथवामेषेवटांशोयदिदीयते । तुलायां मकरे चंद्रेवैधव्यं लभते तदा' इति ॥ १७ ॥

सुखगृहं सुखहृत्तनुजन्मनोरबलताश बलैः सुखकर्तृभिः॥अपि तपोव्ययभं व्ययभंक्तृचेद्विगतबाधनका धनकारिणः ॥ १८ ॥

अथ चतुर्थद्वादशलग्नस्य दोषं तदपवादं चाह।तनुश्च

जन्म च तनुजन्मनी तयोस्तनुजन्मनोः जन्मलग्नजन्मराश्योः सुखगृहं चतुर्थभवनं तनुगतमित्यनुवृत्तिः। सुखहृत्सुखनाशनं स्यात्।कैः सुखकर्तृभिर्गृहैः अबलताशबलैः'कालाच्च' इति सप्तम्यर्थे तृतीया। अबलानां भावः अबलता तया शबला मलिनास्तैर्बलरहितैरित्यर्थः । अर्थात्सुखकर्तारो ग्रहा यदि बलिनःस्युस्तदा जन्मलग्नराशिभ्यां चतुर्थलग्नं सुखहृत्स्यादिति । अपीति । तयोर्जन्मलग्नजन्मराश्योः व्ययभं द्वादशभवनमपि।तनुगतं तदा व्ययभंक्तृ स्यात् व्ययं भनक्तीति व्ययभंक्तृ व्ययनाशनं तदा कदा यदा धनकारिणो ग्रहाः विगतबाधनकाः स्युः। विगतं बाधनकं येषां ते तथा बाधारहिताः निर्दुष्टाइत्यर्थः । यदा धनदातारो ग्रहाः दोषरहिताः स्युस्तदा जन्मलग्नराश्योर्द्वादशं लग्नं व्ययनाशकरं स्यादित्यर्थः।अर्थादेते निर्बलास्तदा एतद्व्ययकरंस्यादिति । तथाच गर्गः " चतुर्थद्वादशे कार्ये लग्ने बहुगुणान्विते" इति । अपिचाकार्ये योगबला द्वादशे चतुर्थे इति ॥ १८ ॥

अशुभकृत्खलगःखलु योंशको जनुरनेहसि नेह सितांशुगे ॥ तनुगतेपि शिवं युवयोपयोर्बलवतो लवतो नभयं क्वचित् ॥ १९ ॥

अथ जन्मगृहवशेननवांशस्य दोषांतरं तदपवादं

चाह । जनुषः अनेहा जनुरनेहास्तस्मिन् जन्मकाले अंशक अशुभकृत्खलगो भवति । अशुभं करोतीत्यशुभकृत् सचासौ खलश्च अशुभकृत्खलः तं गच्छतीति अशुभकृत्खलगः जन्मकाले दुष्टकारि पापग्रहो यस्मिन्नवांशेस्ति स नवांशइत्यर्थः । इहास्मिन्नवांशे सितांशुगे सितांशुं चंद्रं गच्छतीति सितांशुगः तस्मिन् सितांशुगे तनुगते लग्नगतेपि । अपिवार्थे । युवयोषितोर्वरवध्वोः शिवं शुभं न स्यात् । वरवध्वोर्जन्मकाले दुष्टकारी पापग्रहो यस्मिन्नवांशेस्ति स नवांशो यदि विवाहकाले चंद्रगतो लग्नगतोवा भवेत्तदा अशुभकृत्स्यादित्यर्थः । इत्यादिकस्यांशजनितदुष्टस्यापवादमाह । बलवतइति । बलवतः बलयुक्ताद्बलवतोंशात्क्वचिद्भयं न स्यात् । चेज्जातकोक्तेन अधिपयुतो दृष्टोवेत्यादि प्रकारेण बलवानंशराशिस्तदा यस्यकस्याप्यंशजनितस्य दुष्टस्य भयं न स्यादित्यर्थः ॥ १९ ॥

अनुजनुर्मृतिगो मृतिपश्च यः सतनु-
गस्तनुते न शिवं क्वचित् ॥ इति वि-
विक्तिकरियं फलदा सदा सइह सिध्य-
ति चेत्समयः स्फुटः ॥ २० ॥

अथ जन्मकालिकग्रहवशेन दोषांतरमाह । जनु-

रनुक्रम्य अनुजनुरव्ययीभावः । अथवा अनुगतो जनुः अनुजनुः 'अत्यादयःक्रांताद्यर्थैर्द्वितीयया' इति तत्पुरुषः पुंवत् "जनुर्जननजन्मानि"इत्यमरः । जन्मकालानुक्रमेण यो ग्रहो मृतिगजन्मलग्नादष्टमः यश्च जन्मलग्नान्मृतिपः अष्टमस्थानाधीशः सग्रहो यदि विवाहकाले तनुगतो लग्नगतस्तदा शिवं शुभं कचिन्न तनुते न कदाचिच्छुभं करोतीत्यर्थः । इतीयं जन्मकालवशेन या उक्ता विविक्तिः विवेकः विवेचनं विविक्तिः सा सदा तदा फलदा स्यात् । तदा कदा चेत्स जन्मकालो विवाहकालश्च इह काले स्फुटः सिद्ध्यति । यदा घटीपलात्मिकः स्फुटो जन्मकालो विवाहकालश्च साधितःस्यात्तदैवेदं सूक्ष्मफलविवेचनं स्यान्नान्यथेत्यर्थः ॥ २० ॥

इति विवाहवृंदावने नवांशचिंताध्यायश्चतुर्थः ॥ ४ ॥

इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां नवांशचिंताध्यायश्चतुर्थः ॥ ४ ॥

## अथ लग्नबलाध्यायः ॥

अरिपराक्रमलाभविनाशगोरविरविक्रमसौख्यसुतार्थदः ॥ मदनमूर्तिशयःशयसंग्र

हे मृगदृशामशनिः शनिराहुवत् ॥१॥

एवं लग्ने नवांशशुद्धिमभिधायाधुनाग्रहबलशुद्धिमाह। तत्रादौ लग्नाद्रवेः शुभाशुभस्थानान्याह। अत्रापि द्रुतविलंबितवृत्तानि । अरिः षष्ठं पराक्रमस्तृतीयं लाभ एकादश विनाशोष्टम एषु गच्छति तथा लग्नादेषु वर्तमानो रविः मृगदृशां स्त्रीणां शयसंग्रहे पाणिग्रहे अविश्रमसौख्यसुतार्थदः स्यात् नास्ति विश्रमो विश्रांतिर्यस्य तदविश्रमं तच्च तत्सौख्यं च तद्ददातीति तथा 'पंचशाखः शयः पाणिः' इत्यमरः। शेषेष्वष्टसु स्थानेषु दुष्टइत्यर्थसिद्धम् ॥ तत्राप्यतिदुष्टस्थानद्वयमाह। मदनेति । मदनमूर्तिशयः अशनिः स्यात् । अतिदुष्टःस्यादित्यर्थः । मदनः सप्तमं मूर्तिर्लग्नं तत्र शेतेसौ मदनमूर्तिशयः सप्तमस्थो लग्नस्थोवेत्यर्थः।अशनिरिवाशनिःखङ्गःघातक इति यावत्। शनिराहुवत्। यथैषु स्थानेषु शनिराहू तथैव रविरिति शनिराह्वोरपीदमेव फलमिति भावः। अत्र राहुशब्देन केतुरपि गृह्यते । तस्यापि तद्रूपत्वात्। यतो वक्ष्यति च "वृत्तपातमपरंखपाततो राहुः" इत्यादि । अतएव स्पष्टमाह। श्रीपतिः "प्राग्लग्नाद्रविनंदनेन शिखिना स्वर्भानुना च क्रमात्" इति ॥ १ ॥

त्रिधनलाभसुखेषु शुभः शशी निध-

नमूर्तिरिपुष्वतिगर्हितः ॥ अशुभशु-
क्रसखः सखनत्यसून्दिनकरोनकरो
न करोति शम् ॥ २ ॥

अथ चंद्रस्य त्रयस्तृतीयं धनं द्वितीयं लाभ एकादशं सुखं चतुर्थमेषु शशी शुभः स्यात्। शेषेष्वशुभः तत्राप्यतिदुष्टान्याह। निधनेति। निधनमष्टमं मूर्तिर्लग्नं रिपुः षष्ठमेष्वतिगर्हितोऽतिदुष्टः। एतत्प्रसंगेन दोषांतरमाह। अशुभइति। अशुभश्च शुक्रश्च अशुभशुक्रौ तयोः सखा सतथा "राजाहःसखिभ्यष्टच्" पापयुक्तः शुक्रयुक्तो वेत्यर्थः। असून्प्राणान् खनति प्राणनाशको भवतीति। अर्थाद्बुधयुक्तो गुरुयुक्तो वा शुभः। दोषांतरमाह। दिनकरेति। दिनकरो नकरः शं सुखं न करोति दिनकरेण ऊनाः करा रश्मयो यस्य स तथा अस्तंगत इत्यर्थः॥ २॥

अवनिजस्त्रिभवारिषु वृद्धये मृतिक-
रोमृतिमूर्तिमदाश्रितः ॥ इह नभो
युजिजीवदृशं विना च्युतनयातनया
मिषभुग्वधूः॥ ३ ॥

अथ भौमस्य अवनेर्जातो अवनिजो भौमः त्रिभवारिषु वृद्धये भवति शेषेषु नवसु दुष्टः तत्राप्यतिदुष्टानि। मृतीति। मृतिरष्टमं मूर्तिर्लग्नं मदः सप्तम-

मेतानि आश्रितः एषु स्थित इति यावत् । मृतिकरः स्यात् इहास्मिन् भौमे नभोयुजि सति नभसा युनक्तीति नभोयुक्तस्मिन्नभोयुजि दशमस्थे सति वधूःच्युतनया सती तनयामिषभुक् स्यात् च्युतस्त्यक्तो नयोयया सा तथा अन्यायमार्गवर्तिनी तनयस्यामिषं मांसं भुनक्तीति तथा । अस्यापवादमाह । जीवदृशं विना तस्मिन् दशमस्थे भौमे गुरुणा दृष्टे सति नायं दोष इत्यर्थः ॥ ३ ॥

व्ययगृहं विरहय्य हिमांशुजःसकल-
वेश्मसुखेमसुतार्थदः सनियतं विद-
धातिवधूवरं यमकरे मकरेंगित-
मृत्युगः ॥ ४ ॥

अथ बुधस्य हिमांशुजो बुधद्वादशगृहं विरहय्य पृथक्कृत्य शेषेषु सप्ताष्टमव्यतिरिक्तेषु वेश्मसु स्थानेषु वेश्म गृहं सुताः पुत्राः अर्थो द्रविणं तत्प्रदः सप्तमाष्टमयोस्तु अतिदोषमाह। सनियतमिति। सबुधः मकरेंगितमृत्युगः वधूवरं यमकरे नियतं विदधाति करोति मकरेण इंगितं चेष्टितं यस्य स मकरेंगितो मदनः सप्तमं मृत्युरष्टमं तत्र गतो बुधो वधूवरं यमहस्ते विदधाति मारयतीत्यर्थः ॥ ४ ॥

गुरुरनंत्यमदेषुमुदं श्रियंसृजातिका

लग्नृहेगृहभंगदः ॥अशुभकृन्मकरेपि करग्रहे न मृगराजगतो जगतो हितः ॥ ५॥

अथगुरोः अंत्यं द्वादशं मदःसप्तमं ताभ्यामन्यानि अनंत्यमदानि तेषु द्वादशसप्तमव्यतिरिक्तेषु स्थितो गुरुः मुदं हर्षं श्रियं लक्ष्मीं च सृजति ददाति। तत्राष्टमे महादोषमाह । कालगृहइति । कालो मृत्युः तद्गृहमष्टमं तत्र स्थितो गुरुर्गृहभंगदः स्यात् गृहं भार्या तस्या भंगो मृतिस्तत्प्रदः । एतत्प्रसंगेन गुरोर्दोषांतरमाह । अशुभकृदिति । मकरेपिस्थितोगुरुः करग्रहे अशुभकृत्स्यात नीचराशिस्थितत्वात् । दोषांतरमाह नमृगेति । मृगराजःसिंहस्तत्र गतो गुरुः जगतो विश्वस्य करग्रहे न हितः न शुभः ॥ ५ ॥

सहपत्ननिमीलनमन्मथे प्रथमदेवगुरुर्गुरुभीतिकृत् ॥ वहति शेषगृहेषुमहोत्सवं व्ययगतः समतांसमतांतरात् ॥ ६ ॥

अथ शुक्रस्य सह सहजं तृतीयम् । एकदेशग्रहणेन नामग्रहणात् । सपत्नः शत्रुः षष्ठं निमीलनं मरणमष्टमं मन्मथो मदनः सप्तमम् । एषु प्रथमदेवगुरुः गुरुभीतिकृत्स्यात् प्रथमादेवा दैत्याः 'पूर्वदेवाः सुरद्विष' इत्यभिधानात् । तेषां गुरुः शुक्रः गुरुभीतिर्महाभयं मर-

णादितत्कारी भवेत् शेषगृहेष्वष्टसु स्थानेषु महोत्सवान्वहति प्रापयति ददातीत्यर्थः । तत्रद्वादशे विशेषः व्ययगतइति । सशुक्रोव्ययगतो द्वादशस्थः मतांतरादन्येषां मते सप्तमतां मध्यत्वं वहति तथाच तद्वाक्यं "केप्याहुरंत्ये शुभदौसितेज्यौ"इति । शनिराहुकेतूनां फलं रविवदित्युक्तमेव ॥ ६ ॥

खलकृतातनुरोहिणिमित्रयोर्दुरधराविधुरांकुरुतेवधूम् ॥ श्रुतिशरांशमितस्मरभेतयोर्ग्रहमपुण्यमपुण्यमिव त्यजेत् ॥ ७ ॥



एवं प्रातिस्विकं भावफलमुक्त्वाधुना कर्तरीलक्षणं विशेषफलं जामित्रफलं चाह । तनुर्लग्नं रोहिण्या मित्रं रोहिणिमित्रं रोहिणीभर्ताचंद्रः"ङ्यापोःसंज्ञायाम्"इति ह्रस्वः तयोर्लग्नचंद्रयोः खलकृता पापग्रहकृता दुरधरावधूं विधुरां वियुक्तां कुरुते।दुरधराजातके प्रसिद्धा "उभयस्थितैर्दुरधरा"इति।लग्नाच्चंद्राद्वा द्वितीयद्वादशस्थयोः पापग्रहयोः सतोः पापग्रहकृता दुरधरा स्यात् । सात्र कर्तरीत्युच्यते । सा वधूं विधवां कुरुते । अथ जामित्रदोषः । श्रुतीति । तयोस्तनुरोहिणामित्रयोः श्रुतिशरांशं पंचांशदंशमितं प्राप्तमपुण्यं पापग्रहं त्य-

जेत् । किमिव । अपुण्यमिव । लग्नं चंद्रो वा यस्मिन्नवांशेस्ति तस्माच्चतुःपंचाशत्तमे नवांशे यदि पापोऽस्ति तं पापग्रहं पातकवद्दूरं त्यजेदित्यर्थः ॥ ७॥

क्षिपति सप्त दिनान्युदयास्तयोःसुर-
गुरुश्च भृगुश्च गतैष्ययोः॥इह युगेपि
युगस्य करग्रहस्फुटनमंगलदो गल-
दोजसि ॥ ८ ॥

अथ गुरुशुक्रयोर्बाल्यादिदोषमाह । सुरगुरुर्भृगुश्च गतैष्ययोरुदयास्तयोः सप्तदिनानि क्षिपति शुभमिति शेषः । कालनैरंतर्ये द्वितीया । गुरुः शुक्रो वा स्वोदयादनंतरं सप्तदिनानि बालः अस्तात्प्राक्च सप्त दिनानि वृद्धः क्षिपति प्रेरयति नाशयतीत्यर्थः । इहास्मिन्युगे युग्मे गुरुशुक्रयुगुले गलदोजसि सति युगस्य वधूवरस्य करग्रहो विवाहः स्फुटमत्यर्थममंगलदः स्यात् । उल्बणं विशदं स्फुटमित्यभिधानात् गलत् ओजो बलं यस्य तद्गलदोजस्तस्मिन्गलदोजसि स्थानादिबलहीने अस्तंगते नीचास्थिते चेत्यादि सूचितम् ॥ ८ ॥

शिशुजरत्वमहान्युदयास्तयोर्दशचतु
र्दशचांगिरसः स्फुटम् ॥उशनसो दश

पंच च पश्चिमे गतिवशात्रिदशाहम-
पश्चिमे ॥ ९ ॥

एवं मतांतरात्सामान्येन बालत्ववृद्धत्वे उक्त्वा दिनादिकपरत्त्वेन तयोः सयुक्तिकं विशेषमाह । अंगिरसो बृहस्पतेः शिशुजरत्त्वं क्रमेण दश चतुर्दश अहानि स्फुटं स्यात् । शिशुश्च जरंश्च शिशुजरन्तौ 'जीनो जीर्णो जरन्नपि' इत्यमरः । तयोर्भावः शिशुजरत्त्वं दश दिनानि बलत्वं चतुर्दश वृद्धत्वमिति । अत्र स्फुटमित्युक्तेः पूर्वं साधारण्येनोक्तमिति सूचितम् । उशनसः शुक्रस्य शिशुजरत्त्वं पश्चिमे पश्चिमदिशि क्रमेण दश पंच च अहानि स्यात् । पश्चिमोदये दशदिनं बालत्वमस्ते पंचदिनं वृद्धत्वमित्यर्थः । अपश्चिमे पूर्वदिशि त्रिदशाहं स्यात् । त्रयश्च दश च त्रिदश त्रिदश च तानि अहानि त्रिदशाहस्तम् । कालनैरंतर्यें द्वितीया । अहःशब्दाट्टच् । " रात्राह्नाहाः पुंसि"। त्रिदिनं बाल्यं दशदिनं वृद्धत्वमित्यर्थः। कस्माद्गतिवशात् । शुक्रस्य वक्रमध्य एव पश्चिमास्तं पूर्वोदयश्च भवत्यतोऽर्कस्य प्राग्गतित्वाच्छुक्रस्य पश्चिमगतित्वाच्च गतियोगेन तदंतरवृद्धत्वे सति अल्पदिनैरेव शुक्रस्योज्ज्वलता स्यात् । अतोऽत्र बालत्ववृद्धत्वमल्पदिनमुक्तम् । पश्चिमोदयपूर्वास्तौ तु मार्गगता-

वेव भवतः । अतस्तत्र गत्यंतरेणांतरवृद्धौ सत्यां बहुदिनैरुज्ज्वलता स्यादतस्ते बहुदिनमुक्ते अतोऽत्र हेतुर्गतिवशादिति ॥ ९ ॥

द्युमणिजीवलवोदयशासिनामुडुपतेरिति पंचबलीं विना ॥ परिणमंति फलानि चलभ्रुवां फलविरिंचि विरिंचिकृतान्यपि ॥ १० ॥

एवं लग्नाद्ग्रहबलान्युक्तानि तत्र केषामावश्यकत्वं तदाह । द्युमणिः सूर्यः । जीवो गुरुः । लवोदयौ शिष्टस्तौ लवोदयशासिनौ अंशपतिलग्नपती तेषां चतुर्णामुडुपतेश्चंद्रस्य इति पंचबलीं विना चलभ्रुवां फलानि विरिंचिर्ब्रह्मा 'विरिंचिः कमलासनः' इत्यमरः । तेन कृतान्यपि शुभं विरिंचि परिणमंति । पंचानां बलानां समाहारः पंचबली । चला चंचला यासां ताश्चलभ्रुवः स्त्रियः तासां फलानि विरिचंति तानि फलविरिंचि शुभनाशकानि । प्रथमाबहुवचनं रिच् विरेके । कर्तरि क्विप् परिणमंति परिपच्यंते । यत्र लग्ने द्युमणिजीवादीनां पंचानां बलं न लभ्यते तदा स्त्रीणां सर्वाणि फलानि ब्रह्मकृतान्यपि शुभनाशकत्वरूपं परिपाकं प्राप्नुवंतीत्यर्थः ॥ १० ॥

व्ययगृहं बुधभार्गवजीवयुग्यदि

नतत्कुलमित्रजनेष्वपि ॥ कृपणता नरनीरजनेत्रयोरिति न शक्रमते क्रमते मतिः ॥ ११ ॥

अथ द्वादशबुधगुरुशुक्राणां मतांतरमाह । व्ययगृहं द्वादशस्थानम् । यदि बुधभार्गवजीवयुग्न भवति । यद्येकोऽपि व्ययस्थाने न भवेत्तदा नरनीरजनेत्रयोः नरो वरः नीरजं कमलं तद्वन्नेत्रे यस्याः सा वधूः वरवध्वोः कृपणता स्यात् । केष्वपि कुलमित्रजनेष्वपि कुलमित्राणि कुलपरंपरागतमित्राणि । यद्वा कुलं पुत्रभ्रात्रादि मित्राणि सुहृदः ते च ते जनाश्च तेष्वपि किं पुनरन्येषु इदं कस्य मतमित्याह । इतीति । इत्येवंविधे शक्रमते इंद्रमतविषये अस्माकं मतिर्न क्रमते न चलति । एवंविधे इंद्रमतेऽस्माकं बुद्धिः न प्रवर्तत इत्यर्थः । तथा च ऐंद्रविवाहपटले 'बुधभार्गवजीवानामेकोपि यदि न व्यये। तदौदार्यं न दंपत्योः पुत्रपित्रंतिथिष्वपि'इति ॥ ११ ॥

इति विवाहवृंदावने लग्नबलाऽध्यायः पंचमः ॥ ५ ॥

इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां लग्नबलाध्यायः पंचमोऽध्यायः ॥ ५ ॥

# अथ चंद्रबलाध्यायः ॥

कन्यकावितरणाय पूरुषः पात्रमा-
त्रमिति नैंदवं बलम्॥केचिदस्य वित-
रति कोविदाः को विदां किल करो-
तु तन्मनः ॥ १ ॥

एवं लग्नबलमुक्त्वाधुना वधूवरयोश्चंद्रबलविचार आरभ्यते। तत्रादौ मतांतरमनूद्य दूषयति।अत्राध्याये रथोद्धतवृत्तानि। कन्यकाया वितरणं दानं तस्मै कन्यादानाय। पूरुषो वरः'पुरुषाः पूरुषा नराः' इत्यमरः। पात्रमात्रं पात्रमेव पात्रमात्रम्। इति हेतोरस्य वरस्य ऐंदवं बलम्। इंदोरिदमैंदवं चंद्रबलं केचित्कोविदा बुधाः। 'सन्सुधीः कोविदो बुधः'इत्यमरः। न वितरंति न ददाति। वरः पात्रमात्रमिति हेतोर्वरस्य विवाहे चंद्रबलं नावलोक्यमिति केषांचिन्मतं तद्वाक्यं च "नाधिकारो नराणां च विवाहे गर्भशोधने" इति। तेषामुपहासमाह।को विदामिति। तेषां मनस्तन्मनः किल कः विदांकरोतु विचारयतु न कोऽपितेषांमानसं त एव जानंत्वित्यर्थः।विदांकुर्वंत्वित्यन्यतरस्यां" इत्याम् लोटो लोपः लोडंतकृभ्वोऽनुप्रयोगश्च। तेन विदामित्यामंतमव्ययम् ॥ अतोऽनयोर्व्यवधानेऽपि प्रयोगो घटते। यथा रघुकाव्ये' तं पातयां प्रथममास पपात पश्चात्'इति ॥ १ ॥

ईदृशं यदि ततः प्रतिग्रहग्राहिणोऽस्य किमभिप्रपंचितैः ॥ सांशनाडिगण-योनिशुद्धिभिर्जन्मलग्नभवनव्यया-ष्टमैः ॥ २ ॥

एवं ये मन्वानास्तेषामनिष्टमाह । ततस्तस्मादुक्त-हेतोः यदीदृशं पात्रमिति हेतोर्वरस्य चंद्रबलं दद्या-दिति । तदास्य प्रतिग्रहग्राहिणो वरस्य सांशनाडी-त्यादिभिरभिप्रपंचितैः सविस्तरं प्रतिपादितैः किम्।प-चि विस्तारे।प्रति ग्रहं प्रतिगृह्णातीतिप्रतिग्रहग्राही अंश-श्वनाडिश्च गणश्च योनिश्च तेषां शुद्धयः ताभिः सह वर्त-मानानि तानितथा।जन्मनिलग्नभवने ताभ्यांव्ययाष्टगा-नि तानि तथा अयं भावः। यत्त्वयोच्यते वरः प्रतिग्रह-ग्राहक एव पात्रमात्रमतोऽस्य नैंदवं बलम् । एवं चेत्तर्हि वरस्य'पराशरः प्राह नवांशभेदात्'इत्यादिनांशशुद्धिः नाडीयोनिगणानांशुद्धयश्च जन्मलग्नजन्मराशिभ्यांद्वा-दशाष्टमगतानि लग्ननवांशादीनि सप्रपंचं कथं प्रतिपा-दितानि इत्यादीनि वरस्य त्वयापि गृह्यंते तर्हि एकं चंद्रबलं कथं न गृह्यते इति तस्यानिष्टम् ॥ २ ॥

लाग्निको नवलवः पुमंतकृत्स्वामि-ना यदि न युक्तवीक्षितः॥संगमं दिश-

तिदीर्घनिद्रया पत्युरिंदुतनुकामगो ग्रहः ॥ ३ ॥

किंच अस्य श्लोकद्वयस्य एवमादीत्यनेन संबंधः । लग्ने भवो लाग्निकः नवलवो नवांशः यदि स्वामिना निजाधिपेन युक्तो वीक्षितो वा न स्यात् पुंसः अंतः पुमंतः अतोऽवसानं किंच संगममिति । इन्दुतनू ताभ्यां कामगः सप्तमगो जामित्रस्थितो ग्रहः पत्युर्भर्तुर्दीर्घनिद्रया मरणेन सह संगमं समागमं दिशति ददाति दिश दाने । भर्तुर्मरणकृदित्यर्थः ॥ ३ ॥

चंद्रमस्युपचयात्परिच्युते चारुगोचरचरैः परैरपि ॥ कर्तुरायतिशुभं सभंगुरं निर्दिशंत्यसितशौनकादयः ॥४॥

चंद्रमसीति । चंद्रेउपचयाद्वृद्धेःसकाशात्परिच्युते बलहीने सति कर्तुर्वरस्य आयतिशुभमुत्तरकालीनं शुभं 'उत्तरः काल आयतिः' इत्यमरः । सभंगुरं सभंजनम् । भंजेर्भावे कुरः । विनश्यादिति यावत् । असितशौनकादयो मुनयो निर्दिशंति कथयंति । कैरपि परैर्भौमादिभिर्ग्रहैश्चारुगोचरचरैरपि चारुश्चासौ गोचरश्च तत्र चरंति ते तथा । गोचरे शुभस्थाने स्थितैरपि । अयंभावः । चंद्रे क्षीणत्वादिना बलहीने सति अन्यग्रहाणां गोचरबलल‌ाभे सत्यपि वरस्योत्तरकालीनं सर्व-

शुभफलं नश्यतीत्यसितशौनकादयो जगुः । उक्तं च तैः । 'न कुर्वीतास्तगे चंद्रे दुःस्थिते जन्मराशितः । क्रूरग्रहयुते तद्वन्मंगलान्यखिलान्यपि'इति ॥ ४ ॥

एवमादिफलवादिनो नृणामैंदवं बलमुशंति किं न ते॥ भानुरप्युपचये नृजन्मतो यन्मतोक्तिषु तदिष्टमेव नः ॥ ५ ॥

इत्याद्यनिष्टप्रसंगेनतन्मतं दूषयति। नृणां एवमादिफलवादिनः एवमादीनि फलानि पुरुषाणामिच्छंति त एकं चंद्रलं कथं नेच्छंतीति तेषामनिष्टः अतस्तैरपि वरस्य चद्रबबलं स्वीकर्तव्यमित्यर्थः। यदुक्तं तैः "पुंसां रविबलं ग्राह्यम्"इति तत्स्वीकरोति। भानुरपीति। येषां मते यन्मते उक्तयः यन्मतोक्तयः तासु यन्मतवचनेषु नृजन्मतः नरस्य जन्मराशेः सकाशाद्भानुरुपचये भाव्य इत्यध्याहारः । गोचरे हि भानुरुपचयस्थान एव शस्तः तन्नोऽस्माकमपि इष्टं संमतमेव। तथा च तद्वाक्यम् 'योनिः स्त्रीणां शिशिरकिरणश्चित्रभानुश्च पुंसाम्' इत्यादि। अत्र यदुक्तं स्त्रीणामेव चंद्रबलं तन्निराकृतम् । यदुक्तं रविबलमिति। तदस्माकमपीष्टमितिभावः । अतो वरस्य वध्वा अपि गोचरेण चंद्रबलं रविबलं च ग्राह्यमि-

ति सिद्धम्। वक्ष्यति च 'योषितां गुरुपतंगगोचरः' इत्यादि। एवमनिष्टप्रसंगेन तन्मतं निरस्य युक्त्यंतरेणापि पुनर्दूषयति ॥ ५॥

न त्रिवर्गपतिना नरेण चेत्कन्यया शशिबल समाप्यते॥ दीयते यदिह गोमहीमहिष्यादि तर्हि दिश तस्य तद्बलम् ॥ ६ ॥

त्रिवर्गपतिना नरेण शशिबलं न समाप्यते। कन्यया कृत्वा समाप्यते लभ्यते। त्रिवर्गपतिनेति हेतुगर्भं। धर्मार्थकामानां स्वामिना पुरुषेण कन्याद्वारा यदि चंद्रबलं प्राप्यते तर्हि इह विवाहसमये यत् गोमहीमहिष्यादि दीयते तर्हि तद्बलं तेषां गोमहीमहिष्यादीनां यच्चंद्रबलं तत्तस्य वरस्य दिश देहि। गौर्धेनुः मही क्षेत्रवाटिकादिः महिषी प्रसिद्धा। आदिशब्देन दासीदासशय्यादीनां ग्रहणम्। यदि पात्रमात्रमिति हेतोः कन्याया यच्चंद्रबलं तदेव वरस्य तर्हि गवादिकं यद्दीयते तस्यापि यच्चंद्रबलं तदपि वरस्य भवेदित्यतिप्रसंगः। यद्वायमन्वयः। चेत्त्रिवर्गपतिना नरेण शशिबलं न समाप्यते न प्राप्यते यदि कन्यया समाप्यते तर्हि इह विवाहे यद्गवादिकं दीयते तस्य गवादेस्तद्बलं तस्य चंद्रस्य

बलं दिशत्यतिप्रसंगः। यच्च परमते 'योनिः स्त्रीणां शिशिरकिरणः' इत्यादि तदनुवदन्दूषयाति ॥ ६ ॥

इंदुरिंदुवदनानुगं बलं यच्छतीह युवतिग्रहो यतः ॥ सन्नृणामपि कथं षडष्टगः खंडयत्ययमसून्प्रसूतिषु ॥ ७ ॥

इंदुश्चंद्रमाः इंदुवदनानुगं बलं यच्छति ददाति इंदुरिव वदनं यस्याः सा इंदुवदना तामनु गच्छतीति इंदुवदनानुगं। अंगनानुसारं यत इंदुःयुवतिग्रहःस्त्रीग्रहः तस्मात्तद्बलं स्त्रीणामेव न तु नराणामिति चेत्तर्हि अयं चंद्रमाः प्रसूतिषु जन्मकालेषु षडष्टगः सन्नृणां पुरुषाणामपि असून्प्राणान्कथं खंडयति। अयमर्थः। चंद्रमाः स्त्रीग्रह इति कृत्वा विवाहे स्त्रीणामेव चंद्रबलं ग्राह्यं तर्हि तेनैव हेतुना जन्मकाले षष्ठाष्टगेन चंद्रेण नृणामरिष्टं न कार्यं तच्च तेषामप्यस्ति। अतो वरस्यापि चंद्रबलं ग्राह्यमिति सिद्धम् ॥ ७ ॥

होरयाऽपि हिमरश्मिरादृतः पुंस्फलेषु सुनफानफादिषु ॥ अत्रिराह बहुलेऽपि तारका तारकापतिबले बलीयसाम् ॥ ८ ॥

एवं न केवलं पुरुषफले जातके न चंद्रः स्वीकृतः किंत्वन्येष्वपीत्याह। होरया जातकेन हिमरश्मिरा-

हृतः स्वीकृतः। केषु सुनफादिष्वपि पुंस्फलेषु योगेषु पुंसां फलं येषां ते तथा । रविवर्जं द्वादशगैरनफा चंद्राद्द्वितीयगैः सुनफा इत्यादिषु चंद्रयोगेषु अन्येष्वपि चंद्रकृतेषु राजयोगादिष्वपि जातकेन पुरुषफले चंद्रः स्वीकृत इत्यर्थः। अतो वरस्यापि चंद्रबलं विलोक्यमिति सिद्धम्। अथ कृष्णपक्षे केचित्तारां बलीयसीमाहुस्तद्विषयमुपन्यस्यति।अत्रिरिति। बहुले कृष्णपक्षेऽपि तारकापतेश्चंद्रस्य बले सति तारकां बलीयसीं अत्रिर्मुनिराह । कृष्णपक्षेपि न केवलं तारा बलीयसी किंतु तारकापतिबले सति।अतः कृष्णपक्षेऽपि चंद्रबलालाभे सति ताराबलं न प्रमाणमिति मुनेराशयः ॥ ८॥

प्रोषिते विकलवर्ष्मणि प्रिये तोलिलिः
स्त्रियमियेष कार्यिणीम्॥अस्तु किं तु
न पतिप्रतीपतां सान्यथा घटयितुं
पटीयसी ॥ ९ ॥

अथ मतांतरं दूषयितुमुपन्यस्यति।विकलं वर्ष्म शरीरं यस्यासौ विकलवर्ष्मा'शरीरं वर्ष्म विग्रहः'इत्यमरः । तस्मिन्विकलशरीरे प्रोषिते प्रवासं प्राप्ते वा प्रिये भर्तरि सति तोलिलिर्मुनिः स्त्रियं कार्यिणीं । इयेष ऐच्छत् कार्यं विद्यते यस्याः सा कार्यिणी कार्यकर्त्री'अत इ-

निठनौ'इति मत्वर्थे इनिः। कृत्प्रत्ययात्तस्य निषेधेपि क्वचिद्विधानात्। कृष्णपक्षे चंद्रस्य क्षीणशरीरत्वात् वनस्पत्यादिषु प्रोषितत्वाच्च तत्पत्न्यास्ताराया एव बलं मुख्यमितिभावः। एतदभ्युपेत्य दूषयति। अस्तु किंत्विति। तारकार्यिणी अस्तु तर्हि किंतु सा तारा अन्यथा प्रकारांतरेण पतिप्रतीपतां भर्तुरभिप्रेताद्वैपरीत्यं घटयितुं पटीयसी न समर्था। अतिशयेन पटुः पटीयसी सा स्वयं कर्त्री भवतु परंतु भर्तृप्रतिकूलकार्ये न क्षमेत्यर्थः। अतः कृष्णपक्षे चंद्रबलाभावे तारावले न ग्राह्यमिति सिद्धम् ॥ ९ ॥

क्रौर्यमेति बहुले स केवलं नैव नश्यतितममां वसन् ॥ नास्ति चैष यदि तत्र तत्कथं तत्कृताजनिषु रिष्टरौद्रता ॥ १० ॥

अथ कृष्णपक्षे नष्टश्चंद्र इत्युच्यते तद्विषयमाह। स चंद्रमाः बहुले कृष्णपक्षे केवलं क्रौर्यमेति अमां वसन् सन्नेव नश्यतितमाम्। क्रूरस्य भावः क्रौर्यम्। अतिशयेन नश्यतितमां आख्यातमद् आम् चातदंतमव्ययम्। कृष्णपक्षे चंद्रः क्रूरत्वमेव प्राप्नोति क्षीणत्वात् दृश तु वर्तमानश्चंद्रो नातितरां नश्यति किंतु अदृग्गोचरे एव अतो नष्ट इत्युच्यते। यद्वा अमा-

वसन्निति पाठः। तत्र अमेत्यव्ययं सहार्थे।'अमा साकं समं सहेत्यभिधानात्। सूर्येण सह वसन्नित्यर्थः। एष चंद्रः तत्र अमायां अमा समीपे च यदि नास्ति अतितरां नष्टो भवति तदा जनिषु जन्मकालेषु तत्कृता तेन चंद्रेण कृतारिष्टरौद्रता कथं स्यात्। रिष्टस्य रौद्रता उग्रत्वं रिष्टस्य अतिशयता यदि तत्र चंद्रस्य सर्वथा अभावस्तदा तज्जनितमत्युग्रमरिष्टं कथं स्यात्। अतोऽमायां नैव नश्यतीति किंतु प्रकाशहीनस्तिष्ठतीति ग्रहगणिते प्रत्यक्षमप्यस्ति यदि स नष्टो भवति तदा तत्कृतं सूर्यग्रहणं कथं स्यादित्यादि ॥ १० ॥



**पार्श्वगे निजपतौ कुटुंबिनी दुर्बलेऽपि तदभीष्टकार्यकृत् ॥ तारकाऽपि शशिनोऽनुकूलता संभवे भवति पक्षपातिनि ॥११॥**

अथ सिद्धांतमाह। दुर्बलेऽपि निजपतौ स्वभर्तरि पार्श्वगे समीपवर्तिनि सति कुटुंबिनी कुटुंबनिर्वाहका तत्पत्नी तदभीष्टकार्यकृत्स्यात्। तस्य भर्तुर्यदभीष्टं कार्यं तदेव करोति न तु तत्प्रातिकूलम् एवं तारकापि शशिनश्चंद्रस्यानुकूलतासंभवेऽनुकूलत्वालाभे सति पक्षपातिनि अनुकूलत्वं विलोक्यमित्यर्थः। अतः

कृष्णपक्षेपिचंद्रबलसद्भावे ताराबलं ग्राह्यमिति सिद्धम्। तथा चाहुः । चंद्रस्य सर्वदा बलमसिते ताराबलं ग्राह्यमिति ॥ ११ ॥

इति विवाहवृंदावनेचंद्रबलाऽध्यायः षष्ठः ॥ ६ ॥

इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां चंद्रबलाध्यायः षष्ठः ॥ ६ ॥

## अथ राहुसत्ताऽध्यायः ॥

यद्वराहमिहिरोनराहुरित्याहतांडवि
तबाहुरुच्चकैः ॥ संहितास्मृतिसहा
यिनीवहत्यत्रतत्पथविमाथिनीश्रुतिः १॥

अथ केचिद्ग्रहत्वे राहोर्न मन्यंते तदर्थं स्वकौशलं दर्शयन्राहुसत्ताध्यायं वदति । तत्रादौ वराहोक्तमागमप्रामाण्येन दूषयति । एतदारभ्य त्रयोदश रथोद्धतवृत्तानि । यद्वराहमिहिरो न राहुरित्याह । राहुर्नास्तीति ब्रूते।कथंभूतः उच्चकैस्तांडविततबाहुः। उच्चैरेवोच्चकैः। 'अव्ययसर्वनाम्नामकच्प्राक्टेः'इत्यकच्।तांडवं नृत्यविशेषः तांडवं जातं ययोस्तौ तांडवितौ तौ बाहू यस्यासौ तथा उच्चैर्नीततबाहुः सोपहासमिदं

विशेषणम् । अत्रास्मिन्विषये तत्पथविमाथिनीसंहिता स्मृतिसहायिनी श्रुतिर्वहति तस्य पंथास्तत्पथः 'ऋक्पूरब्धूःपथामानक्षे' इत्यप्रत्ययः । तं विमथ्नाति तथा तस्य वराहस्य यो मार्गस्तस्य भंगकर्त्री संहिताश्च स्मृतयश्च ताः सहायाः संति अस्याः सा तथा संहिता स्मृतिसहिता श्रुतिर्वहति प्रसिद्धास्तीति यावत् । राहुर्नास्तीति वराहेण यदुक्तं तत्संहितास्मृतिश्रुतिभिरागमैर्विरुद्धमितिभावः । तद्यथा । वराहेण वृक्षस्य स्वच्छायेत्यादिना एवमुपरागकारणमुक्तमिदं दिव्यदृग्भिराचार्यैः राहुरकारणमस्मिन्नित्युक्तः । शास्त्रसद्भावादिति योऽसावसुरो राहुरित्यादिना च ग्रहणेराहुर्न कारणमिति प्रतिपादितम् । तद्विरुद्धाः संहिता 'जिह्वावलेढिपरितस्तिमिरतुदोपमंडलं यदिसलेहम्' इति । 'अशनिभयसंप्रदायी पाटलिकुसुमोपमोराहुः' इत्यादयः । स्मृतयश्च "सर्वं भूमिसमं दानं सर्वे ब्रह्मसमा द्विजाः । सर्वं गंगासमं तोयं राहुग्रस्ते निशाकरे " इति 'सर्वेषामेववर्णानां सूतकं राहुदर्शने' इत्यादयः । श्रुतयश्च । तत्रमाध्यंदिनीश्रुतिः 'स्वर्भानुर्हतो आसुरिः सूर्यं तमसा विव्याध' इति । अथर्वश्रुतौ हंसोपनिषदि च 'सोहं घनमितिघनमितिकिलिकिलिलक्ष्यराहोःशिरमाच्छादयति । भाछिन्नं पाप्मा वै छायारजनीरूपापाप्मानं करो दुराधर्षयति घृणीविरश्मिविरेचयतिपृथ्वीमाच्छा-

दयति दीप्तिमाच्छादयाति द्यूतिमाच्छादयाति'इत्यादयः एतत्स्वकौशलदर्शनाय ग्रंथकृतः पांडित्यमात्रम्।यतो राहुर्नास्तीति वराहो न ब्रूते किंतु ग्रहणेसौ नकारणमिति न च्छादक इत्यर्थः। अस्यस्मृत्यादिविरोधोपि तेनैव परिहृतः।योसावसुरो राहुस्तस्य वरो ब्रह्मणापुराज्ञप्तः आप्यायनमुपरागेदत्तहुतांशेन तेन भविता तस्मिन्कालेसान्निध्यमस्यतेनोपचर्यतेराहोरित्यादिनाच। अथवराहोक्तिः सम्यगेव ॥ १ ॥

नैर्ऋती दिगियमस्य दिक्पतेर्ध्यान दानबलिभिः फलाप्तये ॥ वेश्म चास्य शशभृद्विमंडलक्रांतिमंडलमिथश्चतुष्पथम् ॥ २ ॥

अथ राहोरस्तित्वे प्रमाणांतराण्याह। अस्यराहोर्दिक्पते र्दिशाधिपतेरियं प्रसिद्धानैर्ऋतीदिगस्तिप्राच्यादीशा रविसितेत्यादिना राहोर्नैर्ऋतीदिक्प्रसिद्धा । किंचअयं ध्यानदानबलिभिः फलाप्तये अभीष्टफलसिद्धये भवति। तत्र ध्यानं ब्रह्मयामलादौ "करालवदनःखड्गचर्ममाली वरप्रदः"इत्यादि ।दानं गोमेदादिबलयः। पूजा कृष्णपुष्पोपहाराद्यैस्तैः फलाप्तये भवति । एभिः प्रमाणै राहुरस्तीति भावः। ननु यथान्येषां ग्रहाणां क्रांतिवृत्ते मेषादिग्रहेषु भ्रमणमस्ति तद्वदस्य नास्तीति

चेत्तत्राह । वेश्म चेति । अस्य राहोः शशभृद्विमंडलक्रांतिमंडलमिथश्चतुष्पथं वेश्म चास्ति चत्वारः पंथानः समाहृता इति चतुष्पथम् । द्विगोः क्लीबत्वं पूर्ववदप्रत्ययः । विमंडलं विक्षेपमंडलं नामैकदेशेन नामग्रहणम् । शशभृतः विमंडलं च क्रांतिमंडलं च तयोर्मिथः परस्परं चतुष्पथं शशभृद्विमंडलक्रांतिमंडलमिथश्चतुष्पथं चंद्रस्य शरवृत्तक्रांतवृत्तयोर्यः संपातश्चतुष्पथरूपस्तदेवास्य स्थानमित्यर्थः । तच्चलनेन अस्यापि चलनं सिद्धं तदेव चंद्रस्य शरपातस्थानं ग्रहगणिते प्रसिद्धम् ॥ २ ॥

सोंधकारचरतां वहन्महीच्छायया
विशति सोममंडलम् ॥ दीपितापरदलेंदुमंडलच्छायया सह च सूर्यमंडलम् ॥ ३ ॥

ननु 'दिग्देशकालावरणादिभेदान्न च्छादको राहुरिति ब्रुवंति ' इति ग्रहगणिते प्रत्यक्षं तद्विरुद्धाः स्मृत्यादयः संतस्तत्समाधानमाह । स राहुरंधकारचरतां वहन्सन्महीच्छायया सह सोममंडलं विशति अंधकारे चरतीति अंधकारचरस्तस्य भावस्तथा भूच्छायां किलांधकाररूपिणी सोप्यंधकारचरः अतस्तत्साहित्येन चंद्रमंडलं विशति आच्छादयतीत्यर्थः । दीपितेति । अंधकारचरतां वहन्संदीपितापरदलेंदुमंडलच्छायया

सह सूर्यमंडलं च विशति । दीपितमपरदलमुपरि-स्थितदलं यस्य तत् दीपितापरदलं तच्च तदिंदुमंडलं च तस्य च्छाया तया । दर्शे किल चंद्रस्योर्ध्वदलं प्रकाशमतोंधकाररूपस्य चंद्रमंडलाधोभागस्य च्छायया सह सोप्यंधकाररूपः सूर्यमंडलं प्रविश्य छादयतीति । अनेन गोलगणितस्य स्मृत्यादीनां च विरोधः परिहृतः । तथा चोक्तं गोलाध्याये "राहुः कुभामंडलगः शशांकं शशांकगश्छादयतीनबिंबम्" इति ॥ ३ ॥

वृत्तयोः पतनमेव पात इत्याहुरत्र किल
राहुरीक्षते ॥ आपतंतममृतद्युतिं सु-
धास्नानदानहवनांशलालसः ॥ ४ ॥

ननु शरवृत्तक्रांतिवृत्तयोः संपाते कथं राहुरस्तीति तत्राह । पतनं पातः वृत्तयोः शरवृत्तक्रांतिवृत्तयोः पतनमेव पात इत्याहुर्गोलविदः । यतो वृत्तयोः संपातस्ततः पात इत्युच्यते । अत्र पाते स्थितो राहुः आपतंतमागच्छंतममृतद्युतिं चंद्रमसमीक्षते ग्रहीतुमवलोकते । किलेत्यागमे । तमेवागमं विशेषणद्वारेणाह।सुधेति । सुधा अमृतं सुधा च स्नानदानहवनं चतेषामंशो विभागस्तत्र लालसस्तत्परः । अत्र संपाते स्थितो राहुरमृतांशोर्ग्रहणनिमित्तस्नानदानमंत्राश्च ब्रह्मवरप्रदानान्मम भविष्यंतीति चिंतयन्नमृतद्युतिं

ग्रहीतुमीक्षत इति भावः। चंद्रो हि अमृतद्युतिः राहुश्च सुधालालसः अतस्तं ग्रहीतुमीक्षत इति युक्तम्। रविग्रहेपि चंद्रच्छायासांनिध्यमस्त्येव। ब्रह्मवरप्रदानादिकं ब्रह्मपुराणादौ प्रसिद्धम्। अत आगमात्तत्र संपाते राहुरस्तीति भावः। एतदेवोक्तं वराहेण "योसावसुरो राहुस्तत्र वरो ब्रह्मणा पुरा ज्ञप्तः॥ आप्यायनमुपरागे दत्तहुतांशेन तेन भविता" इत्यादि॥ ४॥

सैंहिकेयगृहतामुपेयुषोर्दूरगो वियति
वृत्तपातयोः॥ग्रासमेति न रविर्न चंद्रमा
गृह्यते स खलु पार्श्वगस्तयोः॥ ५॥

एवं चेत्तर्हि प्रतिपर्वणि ग्रहणं कथं न स्यात्तत्राह। सिंहिकाया अपत्यं सैंहिकेयो राहुस्तस्य गृहं तस्य भावः तां सैंहिकेयगृहतामुपेयुषोः उपेयतुरित्युपेयवांसौ तयोरुपेयुषोः। इण् गतौ।'उपेयिवाननाश्वाननूचानश्च' इति क्व संपातो निपातः वृत्तपातयोः शरवृत्तक्रांतिवृत्तसंपातयोर्दूरगो रविर्वियति आकाशे स्थितः ग्रासं नैति न प्राप्नोति।न च चंद्रमा ग्रासंमेति। तयोर्वृत्तपातयोः पार्श्वगः स मीपवर्ती स रविश्च खलु निश्चितं गृह्यते राहुणेति शेषः।यद्वा कर्मकर्तरिरूपम्। एतदुक्तं भवति। शरवृत्तक्रांतिवृत्तयोः द्वौ किल संपातौ एकश्चंद्रपातस्थानं द्वितीयस्तत्सप्तमं चेति। ते द्वे अपि राहुस्था-

एकं राहोरपरं केतोश्चेति । तयोर्दूरगो रविश्चंद्रो वा ग्रासं नैति शरबाहुल्यात् । शरोहि राहुचंद्रबिंबमध्ययोरंतरमतो मानैक्यार्धादूने शरे सत्येव ग्रहणं नत्वधिके एतद्ग्रहगणिते प्रसिद्धम् ॥ ५ ॥

राशिवृत्तवसतिः स सूर्यवद्भावगोचर-
फलैर्न हीयते ॥ रिष्टभंगजननैकना-
यको हौरिकैरपि स कैर्न कीर्त्यते ॥६॥

एवं गणितेन राहुसद्भावं प्रतिपाद्य अधुना संहिताजातकाभ्यामप्याह । स राहुः सूर्यवद्भावगोचरफलैर्न हीयते यतोऽसौ राशिवृत्तवसतिः । राशिवृत्ते क्रांतिवृत्ते वसतिः स्थानं यस्य स तथा । सूर्यो हि क्रांतिवृत्तेऽस्ति तत्र राहुरपि चंद्रपातत्वात् । अतः संहितासु सूर्यस्य यादृशानि भावफलानि तादृशानि राहोरप्युक्तानि अतो राहोर्भावगोचरफलसद्भावाद्राहुरस्तीति भावः। एवं जातकेऽपि। रिष्टभंगेति । स राहूरिष्टभंगजननैकनायको भंगश्च जननं च भंगजनने रिष्टस्य भंगजनने रिष्टभंगजनने तयोरेकश्चासौ नायकश्च स तथा । होरां विदंति ते हौरिकाः तैः कैः कीर्तितः । अपि तु स राहुः सर्वैर्जातकविद्भिः रिष्टभंगस्य रिष्टजननस्य च एक एव कर्त्ता कीर्तित एव । तद्यथा।राहुश्चतुष्टयस्थो मरणाय निरीक्षितो भवति पापैरित्यादीनांरिष्टजननानाम् अजवृषभकर्किलग्ने रक्षति।

राहुः समस्तपीडाभ्यः इत्यादीनां च कर्त्ता ग्रहांतरानपेक्ष एक एव कीर्तितः अतोऽसावपि जातकेनापि स्वीकृत इति भावः ॥ ६ ॥

एष शेषखगपाततुल्यतां नैति चंद्ररविपर्वगर्वितः ॥ जातकादिषु यथेंदुमंदिरात्किं तथा न फलमन्यराशितः ॥ ७ ॥

नन्वसौ किल चंद्रपातस्तस्य चेद्ग्रहत्वं तर्हि भौमादिपातानामपि कथं न गृहत्वमिति अत्राह । एष चंद्रपातः शेषखगानां भौमादीनां ये पातास्तत्तुल्यतां नैति न प्राप्नोति । यतोयं चंद्ररविपर्वणा गर्वितः चंद्ररविग्रहणकर्तृत्वेन गर्वं प्राप्तः यतस्तस्य संनिहितावेव चंद्रार्कौ ग्रासं प्राप्नुतः नत्वितरेषाम् अतोऽसावन्यपातसाम्यं न प्राप्नोतीत्यर्थः। किंच जातकादिषु जातकसंहितास्वरशास्त्रयामलादिषु यथा इंदुमंदिराच्चंद्रराशेः फलं तथान्येषां भौमादीनां राशितः फलं नास्ति अतो यथा सर्वत्र फलानि चंद्रराशेस्तथा तत्पातराशेरपि अतश्चासौ शेषपातसाम्यं नैति ॥ ७ ॥

वृत्तपातमपरं स्वपाततो राहुरेति समयात्स्वयंभुवः ॥ मंदिरं तदपि

तस्य तद्गतस्त्यज्यते जगति दिव्य-
रिष्टवत् ॥ ८ ॥

एवं प्रथमे संपाते राहुस्थितिमुक्त्वा द्वितीयेऽपि तत्स्थितिमाह । चंद्रस्य शरवृत्तक्रांतिवृत्तयोः संपात एव चंद्रपातस्तद्राहोः स्थानमिति किलोक्तं तस्मात्षड्भांतरे द्वितीयः संपातस्तमपरं वृत्तपातं राहुरेति गच्छति तत्राप्यस्ति तल्लोके केतुरुच्यते तदपि राहोः स्थानं। कस्मात् स्वयंभुवो ब्रह्मणः समयात् वरस्य संकेतात् 'समयः शपथाचारकालसिद्धांतसंविदः' इत्यमरः । संपातद्वयस्यापि समीपवर्तिनोश्चंद्रार्कयोर्ग्रहणसंभवः । अतो ब्रह्मवरप्रदानात् संपातद्वयेऽपि राहोरवस्थितिरागमसिद्धा तद्गतस्तस्मिन्द्वितीयसंपाते गतो राहुर्जगति इह लोके दिव्यरिष्टवत्त्यज्यते । दिवि भवं दिव्यं तच्च तद्रिष्टं च तद्वत् । दिव्यान्यरिष्टानि ग्रहनक्षत्रजानि तेषु मुख्यं दिव्यं केतुः । अतोऽत्र दिव्यरिष्टशब्देन केतुर्गृह्यते । द्वितीयसंपाते गतो राहुरेव लोके केतुनाम्ना त्यज्यत इति भावः। यतो ब्रह्मपुराणादिषु विष्णुना सुदर्शनच्छिन्नं राहोः शिरो राहुरपरं केतुरित्युक्तम् । अत एकमेव शरीरं द्विधाभूतं राहुकेतुसंज्ञमिति ॥ ८ ॥

पातवद्गतिवशेन शीतगोरुच्चमस्तु

फलदं किलेति चेत् ॥ अस्तु किं तु न हि तन्निवेशितं राहुवद्ग्रहपदे विरिंचिना ॥ ९ ॥

ननु एष शेषखगेत्यादिना यदुक्तं सर्वग्रहेषु मध्ये फलदातृत्वे चंद्रस्य मुख्यत्वात्तस्यापि फलदातृत्वं तर्हि तदुच्चस्यापि तत्कथं न भवेदित्यनूद्य परिहरति। शीतगोः उच्चफलदं किलास्तु। किंवत् पातवत् । केन हेतुना गतिवशेन । यथा प्रागुक्तं चंद्रस्य फलदातृत्वमुख्यत्वात्तत्पातस्य फलदातृत्वं गतिसद्भावात् । तद्वदुच्चस्यापि गतिसद्भावात्फलदातृत्वं किलास्त्विति भावः । इति चेदस्तु।तर्हि किंतु हि यस्मात्कारणात्तदुच्चं विरिंचिना ब्रह्मणा ग्रहपदे ग्रहपंक्तौ न निवेशितं न स्थापितम्। उच्चस्य ब्रह्मवराभावान्न फलदातृत्वमिति भावः ॥ ९ ॥

किंच गोलगणितानि यन्महीमध्यकेंद्रमधिकृत्य तेनिरे ॥ तद्गतः शशिनमीक्षते स्फुटं व्युच्चहेतुमपि पातवर्त्मनि ॥ १० ॥

एवं चंद्रोच्चस्य फलदातृत्वमागमाभावान्निरस्य गोलयुक्त्यापि दूषयति ॥ किंच युक्त्यंतरेणापि

दूषणमस्ति । यत् गोलगणितादीनि कक्षावृत्तादीनि महीमध्यकेंद्रं महीमध्ये वृत्तस्य मध्यं किल केंद्रमुक्त मितिसिद्धांतोक्तेः तत् अधिकृत्य प्राथम्येन धृत्वा तेनिरे विस्तृतानि कर्मकर्तरि रूपम् । यतः सर्वेषां कक्षावृत्तनाडिकावृत्तादीनां मध्यं भूगर्भ एव तद्गतस्त-स्मिन्भूगर्भे स्थितो नरः पातवर्त्मनि पातमार्गे स्थितं स्फुटं शशिनं व्युच्चहेतुमीक्षते पश्यति । अपिरेवार्थे । विगतः उच्चहेतुर्यस्यासौ तथा । उच्चस्य हेतुं विनापी-त्यर्थः । एतदुक्तं भवति । फलभंग्या कक्षावृत्तस्य भूगर्भो मध्यं प्रतिवृत्तस्य मध्यं भूगर्भादंत्यफलज्यां-तरे तत्र प्रतिवृत्ते मध्यमचंद्रस्तदुच्चं च तन्मध्ये चं-द्रकेंद्रं कक्षावृत्ते तु स्फुटचंद्रः तत्रैव तत्पातश्च । उक्तं च 'चंद्रस्य कक्षावलये हि पातः' इति । अतो भूग-र्भस्थो द्रष्टा कक्षावृत्ते स्फुटचंद्रं पश्यति तत्रैव तत्पा-तश्च अतोनयोरेकवृत्तचारित्वाच्चंद्रवशेन तत्पात-स्यापि फलदातृत्वं न तूच्चस्य । अतउक्तं व्युच्चहे-तुमिति । एतद्ग्रंथकृतोक्तं जनानां व्यामोहनमात्रं वास्तवं तु नैतत् । तथा हि यद्यपि प्रतिवृत्तस्य नीचो-च्चवृत्तस्य वा यदुच्चस्थानं तदेवोच्चमित्यस्ति तथा-प्युच्चहेतुं विना कक्षावृत्ते स्फुटचंद्रदर्शनं कथं स्यात् । स्फुटचंद्रस्य कारणमुच्चं भवत्येव । उक्तं च सूर्यसिद्धां-ते । 'अदृश्यरूपाः कालस्य मूर्तयो भगणाश्रिताः॥

शीघ्रमंदोनपाताश्च ग्रहाणां गतिहेतवः ' इत्यादि । अतो व्युच्चहेतुमिति यदुक्तं तन्न चतुरस्रमिति प्रतिभाति । अत एव युक्त्यंतरं वक्ष्यति । अर्कमर्कजेत्यादि । अथ यदुक्तं गतिवशेन तद्दृढयन् अन्यपातानां फलदातृत्वासंभवं प्रतिपादयन् चंद्रस्य फलगौरवं द्रढयति ॥ १० ॥

अत्र यं न विकलादलार्धमप्यह्नि यांति फलमस्तु किं ततः ॥तावदेव फलगौरवं गतिर्यावतीत्यधिफलः कलानिधिः ॥ ११ ॥

अत्र ये भौमादीनां पाताः विकलादलार्धं विकलाया दलं तदर्धमपि अह्नि दिवसे न यांति न गच्छंति तेभ्यः फलं किमस्तु अपि तु नास्तु। न हि ते वर्षशतेनापि कलामात्रं चलंति । अतो यावती गतिस्तावदेव फलैगारवम्।यथा यथा गतिरधिका तथा तथा फलगौरवम् । अल्पकालेनैव फलवैचित्र्यात् इति हेतोः कलानिधिश्चंद्रमाः सर्वग्रहेभ्योऽधिफलः अधि अधिकं फलं यस्यासावधिफलः अन्यग्रहाणां गतियोगोपि चंद्रगतिसमो न स्यादतोसावधिकफल इति भावः । तथा चोक्तम् । 'एकतस्तु ग्रहाः सर्वे एकतः शशलांछनः। ततोधिकतरश्चंद्रस्तस्माच्चंद्रं परीक्षयेत् 'इति ११॥

किंच गोलगणितेषु जिष्णुजः सोम-
रोमकमयादयोपि च ॥ पर्ययेण ननु
राहुपातयोर्नामनी विदधुरेव तां-
त्रिकाः ॥ १२ ॥

अत्र यः असंपातः स एव राहुरित्यर्थे प्रमाणांतरफलमाह।किंच प्रमाणांतरमप्यस्ति जिष्णुजो ब्रह्मगुप्तः सोमः प्रसिद्धः रोमको मुनिः मयो मयासुरः आदिशब्देन पितामहवसिष्ठादीनां ग्रहणम्। ननु एते तांत्रिकाः शास्त्रप्रणेतारः राहुपातयोर्नामनी पर्ययेणैव विदधुः पातपर्यये राहुशब्दं प्रयुंजते घटकलशवत् । तथाचोक्तं 'कुमुदिनीपतिपातो राहुमाहुरिह केपि तमेव'इति।अतो यः पातः स एव राहुरिति सोमरोमकादीनामुक्तेर्वृत्तसंपात एव राहुरित्यर्थः॥ १२ ॥

अर्कमर्कजकुजार्यतुंगतां किं नयंति
यदि तत्पृथग्भवेत् ॥ कल्पना तदि-
यमुच्चमुच्चरन्कोपि रोपितफलं न च
श्रुतः ॥ १३ ॥

ननु पात एव राहुर्भवतु उच्चस्य फलदातृत्वाभावे किमायातं तत्र व्युच्चहेतुमिति कारणमुपन्यस्तं तदपि सूक्ष्मदृष्ट्या विचार्यमाणे संदिग्धमित्याशंकां मनसि धृत्वा तन्निरासे युक्त्यंतरमाह तदुच्चं यदि पृथग्भ-

वेत्फलदातृत्वे स्वतंत्रं भवेत्तर्हि सोमरोमकादयः अर्कजकुजार्यतुंगतामर्कं किं नयंति आर्यो गुरुः अर्कजकुजार्याणां तुंगं तस्य भावस्तथा शनिभौमबृहस्पतीनां शीघ्रोच्चं सूर्य एवेति कथं वदंतीति यद्येषां सूर्य एव शीघ्रोच्चं तदा तस्य फलदातृत्वे पृथक्त्वं नस्यात् तत्तस्मात्कारणादियं कल्पना उच्चं हि कल्पनामात्रं मंदफलानि साधनायेति । उक्तंच गोलाध्याये " यः स्यात्प्रदेशः प्रतिमंडलस्य दूरे भुवस्तस्य कृतोच्चसंज्ञा । सोपि प्रदेशश्चलतीति तस्मात्प्रकल्पिता तुंगगतिर्गतिज्ञैः"इति। अत उच्चस्य कल्पनामात्रत्वान्न फलदातृत्वं तर्हि पातोपि शरसाधनाय कल्पनामात्रं कथं तस्यापि फलदातृत्वं भवेदित्याशंकायामाह । उच्चमुच्चरन्निति । उच्चं रोपितफलमुच्चरन्कथयन् कोपि न श्रुतः रोपितं फलं यस्मिन् तत्तथा उच्चस्य फलं कुत्रापि नश्रुतंतस्य फलश्रवणाभावात्कल्पनामात्रत्वमिति भावः । अतः पातस्य ग्रहत्वं युक्तम् उच्चस्य फलदातृत्वाभावे ग्रंथकृता किमर्थमेतावत्प्रपंचितम् पर्यवसानंतु आगम एव। अतः प्रथमत एव तत्रागमाभावः । कारणं कथं न वक्तव्यमिति ॥ १३ ॥

राहोर्नाहोरात्रवर्षाधिपत्यं सत्यं सर्वे व्योमगानामधीशौ॥यस्य च्छाया पु-

ष्पवंतौ पिनष्टि क्वास्ते तस्य स्वामिताया विनष्टिः ॥ १४ ॥

ननु दिनादेराधिपत्यं तस्य पातस्य कथं नास्तीति तत्राह । शालिनीवृत्तम् । अहोराहोरहोरात्रवर्षाधिपत्यं नास्ति अहोरात्रं वारः वर्षवत्सरः तौ मासहोरादीनामुपलक्षणं तेषां स्वामित्वं राहोर्नास्तीति सत्यं सत्यमेवेति व्यंग्योक्तिः तथापि सर्वव्योमगानां अधीशौ पुष्पवंतौ चंद्राकौं यस्य राहोः छाया पिनष्टि चूर्णयाति 'पिष् पेषणे' तस्य राहोः स्वामिताया विनष्टिः विनाशः क्वास्ते न कुत्रापीति 'एकयोक्त्या पुष्पवंतौ दिवाकरनिशाकरौ' इत्यमरः । ग्रहाधीशौ चंद्राकौं यस्य छायामात्रं विह्वलयाति तस्य स्वामित्वं नास्तीति वक्तुं नशक्यते अतः पारंपर्येण दिनवर्षादीनामत्याधिपत्यं तस्यास्त्येवेति भावः ॥ १४ ॥

प्रतिदिनं खचरः प्रचरन् फलं किमपि यच्छति चारफलो हि सः ॥ ग्रहणऋक्षग एव स चेन्न किं चलति किंचिदुपप्लव एव तत् ॥ १५ ॥

अथ गतिवशात्फलमिति प्रतिपादयन् राहोर्गतिसद्भावे प्रमाणमाह । द्रुतविलंबितम् । खचरः प्रतिदिनं प्रचरन् सन् किमपि फलं यच्छति हि यस्मात्कारणा-

त्स खचरः चारफलः चारेण गत्या फलं यस्यासौ तथा यस्मात्खचरः चारफल इत्युच्यते।तस्माद्यथा यथा यो- ग्रहः किंचलति तथाफलं यच्छतीत्यर्थः ।सराहुःग्रहण- ऋक्षग एवास्ति ग्रहणे नक्षत्रे स्थित एवास्ति "ऋत्य- क "इति प्रकृतिकत्वं। विपक्षे प्रत्यक्षबाधमाह ।सचेदि- ति। स राहुः चेद्ग्रहणर्क्षगो नास्ति तर्हि उपप्लवः किंचि- त् किंचलति उपप्लवो ग्रहणम्। एतदुक्तं भवति। ग्रहणे राहुसान्निध्यमस्त्येवेति प्राक् प्रतिपादितं ग्रहणं हि किंचित्प्रतिमासं सार्धैकभागप्रमाणेति षण्मासैर्नवभागैः पृष्ठतश्चलत्येव तत् एकं ग्रहणं यस्मिन्नक्षत्रे दृष्टं त- त्परम् तत्पृष्ठनक्षत्रे तत्परमपि तत्पृष्ठनक्षत्रे इति प्रत्यक्षं दृश्यते अतो ग्रहणचलनं सैव राहुगतिः॥ ग्रहणेवश्यं तत्सान्निध्यात् । अतश्च राहोर्गतिसद्भावात् ग्रहत्वं फलदातृत्वं च सिद्धम् ॥ १५ ॥

उदयमेति यदा दिवि तत्परं चरति केतुरपि प्रतिवासरम् ॥ भवति न ग्रह एवगतिं विना जगति कर्मविपाकवदा वदः ॥ १६ ॥

एवं राहोर्ग्रहत्वादिकं संस्थाप्यानयैव युक्त्या के- तोरपि ग्रहत्वं संस्थापयति । द्रुतविलंबितम् । यदा दि- वि आकाशे तत्परं तस्य राहोः परं पश्चिमकायः उदय-

मोति तदा केतुरपि प्रतिवासरं चरतीति स्यात्। एतदुक्तं भवति वृत्तपात्तमपरामित्यादिना राहोः षड्भांतरे यो द्वितीयः संपातस्तस्य ग्रहं सकेतुरिति प्रतिपादितं तत्सन्निधावपि यद्ग्रहणं तदपि प्राग्वच्चलति अतः केतोरपि गतिः सिद्धा गतिसिद्धौ सत्यां ग्रहत्वं फलदातृत्वं च साधयति भवतीति गतिंविना ग्रह एव न भवति। कथं भूतः जगति इहजने कर्मविपाकवदावदः कर्मणो विपाकस्तं वदतीति कर्मविपाकवदावदः।पचादित्वादच्। "वरिचलिपतिवदीनां वाद्वित्वमाचाभ्यासस्य" इति द्वित्वमभ्यासस्यात्वं च। यस्य हि गतिरस्ति स एव ग्रहो भवति अतोऽसौ पूर्वकर्मविपाकजनितस्य शुभाशुभस्य सूचको भवेत् तस्मात् केतोरपि ग्रहत्वं फलदातृत्वं च सिद्धम् ॥ १६ ॥

परिहरंत्युपरागपरागतं तम उपप्लव
एव स किं ग्रहः॥इति मणित्थवचांसि
विवृण्वता मतमतक्ष्यत भोजमहीभु-
जा ॥ १७ ॥

ननु ग्रहणे तम एव प्रत्यक्षं दृश्यते स कथं ग्रहो भवेदिति परमताशंका भोजराजेन दूषितेत्याह। द्रुतविलंबितम्।उपरागे ग्रहणे परागतं प्राप्तं तमः उपप्लवो रिष्टमेवेति परिहरंति त्यजंति स किं ग्रहः स ग्रह एव

न भवतीति । तथाहि चंद्रार्कयोर्ग्रहणे स्वाभाविकदीप्ते-रवरोधकं प्रत्यक्षं यत्तमो दृश्यते तदुत्पात एवाप्रकृते-रन्यत्वमुत्पात इत्युक्तत्वात् । परिवेषादिवत्।अतस्त-त्तम उत्पात एवेति परिहरंति आचार्या इति यन्मतं तत् मणित्थवचांसि विवृण्वता मणित्थवाक्यानां विवरणं कुर्वता भोजमहीभुजा भोजराजेन अतक्ष्यत अच्छिद्यत ।तक्षू तनूकरणे कर्माणि लङ्। एतन्मतं मणित्थवाक्यविवरणे भोजराजेन निराकृतमित्यर्थः ।तद्यथा उत्पातो हि गणितागतान्नोपलभ्यते ग्रहणं हि सम्यगुपलभ्यते अतो नोत्पातः । किंच उत्पातो हि दोषविशेषेण यत्र क्वचन दृश्यते चंद्रग्रहणं तु सर्वदेशे अतश्च नोत्पात इति गणितागतप्रत्यक्षमागमश्च ब्रह्मणो वरप्रदानादि ग्रहचारे तत्फलकथनं च लोकेप्रसिद्धिश्च 'राहुकृतं ग्रहणंस्यादागोपालांगनादिसिद्धमिदम्' इति ब्रह्मगुप्तः। अन्या अपि पुरस्तादुक्ता युक्तयश्च इत्यादिप्रमाणैस्तन्मतंभोजराजेन निराकृतमिति भावः ॥१७॥

अथाप्यसौ केवलवासनायां नायाति सिद्धिं तदपि प्रियं नः ॥ अवासनं किं न सुरद्युरात्रमकायनाभ्यां भवतैव भेजे ॥ १८ ॥

नन्वागमप्रामाण्येन राहोः सिद्धिरस्ति परंतु द्विग्देशकालावरणादिभेदैर्गोलवासनायां सिद्धिर्नास्तीति तत्राह॥

उपजातिका। अथापि यद्यपि असौ राहुः केवलाया-मेकस्यामेव गोलवासनायां सिद्धिं नायाति तदपि नो-ऽस्माकं प्रियं मास्तु गोलवासनया सिद्धिः तत्कथम् अर्कायनाभ्यां सूर्यस्योत्तरदक्षिणायनाभ्यां सुराणां देवानां द्युरात्रमहोरात्रमवासनं वासनाबाह्यं भवता त्वयैव किं न भेजे किंन स्वीकृतमपितु स्वीकृतमेव। द्यु इत्यव्ययं दिनवाचकमिति क्षीरस्वाम्यादयः। एतदु-क्तं भवति। मेरुगतानां देवानां नाडिकामंडलं क्षितिजं तस्मादुपरि स्थिताः क्रांतिवृत्तं मेषादयः षट् राशयो दृश्याः तुलादयः षट् अधःस्थिताः अदृश्याः अतो मेषादिषड्राशिस्थितेऽर्के देवानां दिनं तुलादिस्थिते रात्रिरिति द्युरात्रं गोलवासनासिद्धं 'शिशिरपूर्वमृतुत्रय-मुत्तरं ह्ययनमाहुरहश्च तदामरम् 'इत्यादिना पुराणा-दिषु उत्तरायणं दिनं दक्षिणायनं रात्रिरित्यागमस्य विरोधभयादिदं वासनावाह्यमपि द्युरात्रं त्वयापि स्वी-कृतमतोऽस्माभिरप्येकमिदमवासनमागमभया त्स्वी-कृतमिति भावः॥ १८॥

सिद्धांतपक्षस्तु परं दिनार्धान्निशानि-
शार्धात्परतोदिनश्रीः॥ एवं पुराणेग-
णिते च साम्यमर्कायनाभ्यांसदस-
त्फलेषु॥ १९॥

अथानयोर्विरोधं परिहरति । उपजातिका । सिद्धांतपक्षस्त्वयं सिद्धांतस्यायमाशय इति । दिनार्धात्परं निशा निशार्द्धात्परतो दिनश्रीर्दिनलक्ष्मीर्दिनमेवेति यावत् । एवं सत्यर्कायनाभ्यां सकाशात्सदसत्फलेषु विषये पुराणे गणिते च साम्यं स्यात् ॥ एतदुक्तं भवति गणिते किल कर्कसंक्रमे दिनार्धं तत्परं रात्र्युन्मुखत्वाद्रात्रिरित्युच्यते एवं मकरसंक्रमे निशार्धं तत्परं दिनोन्मुखत्वाद्दिनमेवेति।तथाचसिद्धांते विरोधपरिहारः 'दिनं सुराणामयनं यदुत्तरं निशेतरत्सांहितकैः प्रकीर्तितम् ॥ दिनोन्मुखेर्केदिनमेव तन्मतं निशा तथा तत्फलकीर्तनाय तत्'इति ॥ १९ ॥

कर्कं गतेर्के हि सुरापराह्णः फलं पुरा रात्रिवदाहुरस्य ॥ नक्रं गते चापररात्रमेषामेतत्परं वासरवत्स्मरंति ॥ २० ॥

अथैतदेव स्पष्टयति ।उपजातिका। व्याख्यातप्रायमेतत् । हि यस्मात्कारणात्कर्कं गते अर्के सति सुराणां देवानामपराह्णः स्यात् । अन्हः अपरमपराह्णः दिनोत्तरार्द्धम् अस्य फलं पुनः फलंतु रात्रिवदाहुः।नक्रं मकरंगते अर्के सति एषां देवानामपररात्रं स्मरंति रात्रेः अपरमपररात्रः॥ 'अहः सर्वैकदेशे'त्यच् ॥"रात्रान्हाहाः

पुंसि" इति पुंस्त्वम्॥एतत्परमेतस्मात्परं वासरवत्स्मरंति संहिताकारादयः ॥ २० ॥

अतश्च कैश्चिद्दशमीष्वपि प्राक्कापालिको वेधविधिः किलोक्तः॥मासोन्य एवं नियमव्रतादौ पित्र्ये निशार्धं सति पूर्णिमास्याम् ॥ २१ ॥

अस्य दृढीकरणार्थमेतद्दृष्टांतमन्यत्राप्याह । उपजातिका। किलेत्यहंतर्के अतश्चहेतोः दशमीष्वपि प्राक् पूर्वं कापालिको वेधविधिरुक्तः।निशार्धाद्दिनार्धपर्यंतं प्राक्कपालं दिनार्धान्निशार्धपर्यंतं पश्चिमकपालं ग्रहगणिते प्रसिद्धं तयोः कपालयोर्भवः कापालिकः।अयंभावः 'दशमीशेषसंयुक्तो यदिस्यादरुणोदयः ॥ वैष्णवैस्तुनकर्तव्यंतद्दिनैकादशीव्रतम्॥'इत्यादिवाक्यैररुणोदये दशम्याविद्धैकादशी यथा वैष्णवैस्त्यज्यते तद्वत्कैश्चिन्निंबादित्यसंप्रदायिभिरर्धरात्रे दशम्याविद्धैकादशी त्यज्यते अर्धरात्रादुपरि उत्तरदिनप्राप्ते तद्वाक्यं च॥ 'अर्धरात्रेपि केषांचिद्दशमीवेधइष्यते' अतश्च धर्मशास्त्रे पित्र्याशौचार्तवादिषु केचिदर्धरात्रादुपर्युत्तरदिनमिच्छंति अतश्च'विष्टिरंगारकश्चैव व्यतीपातश्च वैधृतिः ॥ प्रत्यरिर्जन्मनक्षत्रं मध्यान्हात्परतः शुभम्॥'इत्यादिवाक्यानामवकाशः अपि चमासोन्य

इति एवमनेनैव हेतुना पौर्णमास्यां पित्र्ये निशार्धे सति नियमव्रतादावन्यो मासः स्यात् पितॄणामिदं पित्र्यं "पितुर्यत्" नियमाःचातुर्मास्ये शाकदधित्यागादयः व्रतानि कार्तिकव्रतादीनि तेषामारंभः पूर्वमासस्य पूर्णमासीमारभ्यैव यतस्तत्र पितॄणां निशार्धं तथाहि चंद्रस्योर्ध्वभागे वसंतः पितरः स्वमस्तकोपरि दर्शे सूर्यं पश्यंति अतस्तत्र दिनार्धम् एवं पूर्णमास्यां सूर्यस्य अधोर्धस्थितत्वादर्धरात्रः कृष्णपक्षार्द्धे सूर्योदयःशुक्लपक्षार्धेस्तमय इति पित्र्यमानस्य वासनया सिद्धान्ते प्रसिद्धम् ॥ २१ ॥

तदिति विद्यत एवस किं परै रुधिरबिं-
दुवपुर्विलसंति ये ॥ त इह तामस-
कीलककेतवः स्वपितृराहुसमर्थनहे-
तवः ॥ २२ ॥

अथ राहुसद्भावे प्रमाणांतरमाह।द्रुतविलंबितम्।तत्तस्मादिति हेतोः स राहुर्विद्यत एव परैरन्यैर्हेतुभिःकिमन्ये हेतवस्तिष्ठंतु तमेव हेतुमाह।रुधिरेति।रुधिरबिंदुवपुर्यथा तथा ये तामसकीलककेतवो विलसंति ते स्वपितृराहुसमर्थनहेतवः स्युः। रुधिरस्य बिंदवो यस्मिस्तद्रुधिरबिंदु तच्च तद्वपुश्च तत्तथा वपुः शरीरं तामसकीलकाश्च ते केतवश्च ते तथा। स्वश्चासौ पिता च स्वपिता तस्य समर्थनं संस्थापनं तत्रहेतवस्ते तथा।ता-

मसकीलकाख्या ये केतवस्ते राहुसुता इत्युक्तत्वात्तेषां केतूनां पिता राहुरस्तीत्यर्थः। तथाचोक्तं वराहसंहितायाम् 'क्षतजानलानुरूपास्त्रिशूलताराः कुजात्मजाः षष्टिः ॥ नाम्ना च कौंकुमारास्ते सौम्याशासंस्थिताः पापाः॥ त्रिंशत्र्यधिका राहोस्ते तामसकीलका इति ख्याताः ॥ रविशशिगा दृश्यंते तेषां फलमर्कवच्चोक्तम्' इति ॥ २२ ॥

यःपर्वगस्तस्य गतिर्न दृष्टा सैव ग्रहत्वेपि महत्प्रमाणम् ॥ विलोमगामी विधुपात एव तस्माद्ग्रहो राहुरिति प्रतीतः ॥ २३ ॥



राहोर्ग्रहत्वंप्रागुक्तप्रमाणेन भङ्ग्यन्तरेण द्रढयति। उपजातिका।यः पर्वगो ग्रहणगोराहुस्तस्यगतिः साक्षान्न दृष्टा किं त्वनुमानेन ग्रहणऋक्षग एवेत्यादिना । अतो गतिरस्तीत्यनुमानसिद्धं सैव गतिर्ग्रहत्वे महत्प्रमाणं हि यस्मात्कारणादेव विधुपातो राहुर्विलोमगामी सदा वक्रचारी अस्ति । यथा चंद्रार्कौ सदानुलोमगामिनौ तथैवायं सदा विलोमगामीति।तथाच भूपालः"राहुकेतू सदावक्रौ शीघ्रगौ शशिभास्करौ" इति । तस्माद्ग्रहो राहुरिति प्रतीतः प्रत्ययं प्राप्तः। एतद्वाक्यं ग्रंथकृतो न भवतीति प्रतिभाति । 'प्रतिदिनखचर' इत्या-

दिना पौनरुक्त्यापात्तेः। तदिति विद्यत इत्यनेनाध्याय-समाप्तिप्रतीतेश्च ॥ २३ ॥

इति विवाहवृंदावने राहुसत्ताध्यायः सप्तमः ॥ ७ ॥

इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशदैवज्ञविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां राहुसत्ताध्यायः सप्तमः ॥ ७ ॥

अथ षड्वर्गाध्यायः ॥ कृत्वा लग्नादर्कवद्रात्रिखंडं भूयो व्यक्षैस्तद्घटीभिर्विलग्नम् ॥ चक्रार्धोने ते च तत्काल एव जायेयातामस्तमध्यान्हलग्ने ॥ १ ॥

अथ षड्वर्गादिफलानि विवक्षुस्तावत्तन्वादिभावानयनं जातकशास्त्रीयमप्यत्र सौकर्यार्थमाह । नव शालिनीवृत्तानि ॥ लग्नादर्कवद्रात्रिखंडं कृत्वा तस्य घटीभिर्भूयः पुनर्व्यक्षैर्लग्नं कार्यं तद्यथा लग्नमेव सूर्यं प्रकल्प्य अयनांशान्दत्वा तस्माच्चरं कृत्वा रात्रिदलं कार्यं तमिष्टकालं प्रकल्प्य तस्मात्सायनांशलग्नाल्लंकोदयैर्भोग्यादिकं कृत्वा लग्नं कार्यमिति । अर्थात्तच्चतुर्थलग्नं स्यात् ते द्वे लग्ने चक्रार्धोने षड्भान्न्यूने कार्ये एवं ते तत्कालमस्तमध्याह्नलग्ने क्रमेण जायेयातामुत्पन्ने भवेताम् ॥ १ ॥

लग्नं तुर्याच्चतुर्यमस्ताद्विशोध्यं मध्या-
दस्तं मध्यमैंद्रीविलग्नात् ॥ शेषत्र्यं-
शान्द्विर्द्विराद्येषु दद्यादेवं भावाः सं-
धिरेतद्दलैक्यम् ॥ २ ॥

लग्नं तुर्याच्चतुर्थलग्नाच्छोध्यं तुर्यमस्तात्सप्तमल-ग्नाच्छोध्यमस्तं मध्याद्दशमलग्नाच्छोध्यं मध्यमैंद्री-विलग्नाच्छोध्यम् । इंद्रस्येयमैंद्री पूर्वा दिक्तत्रविलग्नं तदेव लग्नमित्युच्यते । तस्मान्मध्यं शोध्यम् । शेषाणां चतुर्णामपि पृथक्पृथक्त्र्यंशानाद्येषु लग्नादिषु द्वि-द्विवारं दद्यात् । एवममुना प्रकारेण भावाः स्युः । त-द्यथा लग्नं चतुर्थाद्विशोध्य तस्य त्र्यंशं लग्ने दत्वा द्वितीयभावो भवेत् । पुनरपि तमेव त्र्यंशं द्वितीय-भावे दत्वा तृतीयभावो भवेत् । एवं तुर्यमस्ताद्वि-शोध्य तत्त्र्यंशं तुर्ये द्विर्दत्वा पंचमषष्ठौ भावौ स्तः । एवमष्टमनवमादयः एतयोर्दलैक्यं संधिः स्यात् तद्य-था द्वादशभावलग्नयोरैक्यं दलं तन्मध्यवर्ती संधिः स्यात् । एवं लग्नद्वितीययोर्द्वितीयतृतीययोरित्यादि २॥

संधौ खेटो निःफलो भावभागैस्तुल्यः
सम्यग्भावपक्तिं व्यनक्ति ॥ संधे-
रूनाधिक्यमाप्तो गतैष्यभावाधीनं
संदधाति स्वपाकम् ॥ ३ ॥

अथ ग्रहफलानां भावकल्पनवशात्तारतम्यमाह । संधौ स्थितो ग्रहो निःफलः शुभफलोत्थशुभफलोपि भावभागैस्तुल्यखेटः सम्यक्परिपूर्णाभावपक्तिं भावफलं व्यनक्ति प्रकटयति । ददातीति यावत् । संधेः सकाशादूनाधिक्यमाप्तः प्राप्तः खेटगतैष्यभावाधीनं स्वपाकं संदधाति । संधेरूनो ग्रहो गतभावजं फलाधिकस्त्वैष्यभावजं फलं ददातीत्यर्थः । तत्पदं पादोर्धमेति त्रैराशिकेन कल्प्यम् एवमनेन विधिना यत्र भावे स्थितो ग्रहस्तत्फलं भावजं लग्नराशेः सकाशाद्यावति राशौस्थितो ग्रहस्तत्फलं स्वाभाविकम् ॥ ३ ॥

नांगीकारो भावजानां गुणानां तद्दोषाणां तत्वतस्त्याग एव ॥ भावव्यक्तावष्टमत्वं गतोऽपि त्याज्यो लग्नात्सप्तमः सप्तसप्तिः ॥ ४ ॥

अनयोर्विभेदे सतिनिर्णयमाह । भावेन भावकल्पनया ये जाता गुणास्तेषां गुणानां नांगीकारः न स्वीकारः तस्माद्भावाकल्पनवशाद्ये दोषास्तेषां दोषाणां तत्वतः साकल्येन त्याग एव । अत्र प्रथमस्योदाहरणं भावेति । स्वाभाविके लग्नात्सप्तमः सप्तसप्तिः सूर्याभावव्यक्तौ सत्यां भावकल्पनया अष्टमं गतोऽपि त्याज्य एव । सप्त सप्तयोऽश्वाः यस्यासौ तथा । एत-

दुक्तं भवति। सूर्यः किल सप्तमो दुष्टः अष्टमः शुभः स्वाभाविकेन सप्तमः सूर्यः यदि भाववशादष्टमो भवेत्तदासौ शुभोऽपि त्याज्य एव ॥ ४ ॥

प्रत्याख्येयः पाक्षिकोऽपीह दोषः स-
म्यग्व्यापी यो गुणः सोनुगम्यः॥
यस्मादंशैर्गेहभावाधिकः सन्न स्या-
द्भूत्यै भार्गवः पंचमोऽपि ॥ ५ ॥

अथ सयुक्तिकं द्वितीयोदाहरणमाह । यस्मात्कारणाद्दोषः पाक्षिकोऽपि प्रत्याख्येयस्त्याज्यः गुणस्तु यः सम्यग्व्यापी सोऽनुगम्यः अनुसरणीयः।सम्यग्व्याप्नोतीति सम्यग्व्यापी सर्वसंमतः पक्षांतरगतोऽपि दोषस्त्याज्यो गुणस्तु सर्वसंमत एव ग्राह्य इत्यर्थः। तस्मात्कारणात्पंचमोपि भार्गवः अंशैर्भागैर्गेहभावाद्गृहभावभागेभ्यः अधिकः सन् भूत्यै शुभाय न स्यात्।अयं भावः। पंचमः शुक्रः किल शुभः षष्ठोऽशुभः भावादुभयतो यौ संधी तदंतर्वर्तिनोंशास्ते तद्भाववस्य अतः पूर्वसंधेः सकाशादंशैरधिको ग्रह उत्तरभावस्थितो भवेत् । अतः स्वाभाविकेन पंचमः शुक्रो यदि भाववशेन षष्ठो भवेत्तथापि त्याज्य एव भवति ॥ ५ ॥

संक्रांत्यंतर्वासरैर्यद्द्युवृंदाल्लब्धं भानु-
र्भादिमेषादिमिश्रम् ॥ भक्ता रामै-
र्लग्नभुक्ता नवांशा दिग्भिर्निघ्नास्त्रिंश-
दंशा भवेयुः ॥ ६ ॥

अथ लग्नात्तद्घटिकाज्ञानं विवक्षुस्तदर्थं तावत्संक्रांतिज्ञानमात्रेण सूर्यज्ञानं लग्नांशज्ञानं चाह । अंतर्मध्ये वासराःअंतर्वासराः संक्रांत्योरंतर्वारास्ते तथा तैर्द्युवृंदाद्दिनगणाद्यद्भादि राश्यादि लब्धंतत् मेषादिराशिभिर्मिश्रं युक्तं भानुः स्यात्।तद्यथा संक्रांतिमारभ्य इष्टादिनपर्यंतं योगतो दिनगणः स पूर्वसंक्रांतिमारभ्य उत्तरसंक्रांतिपर्यंतं ये मध्यवर्तिनो दिवसास्तैरभक्तः तस्माद्राश्यादि यल्लब्धं तत्संक्रांतिवशेन गतराशिभिर्युक्तं राश्यादिको भानुः स्यात् । अथ लग्नांशज्ञानं भक्ता इति । लग्नस्य भुक्ता ये नवांशास्ते दिग्भिर्निघ्ना रामैर्भक्तास्त्रिंशदंशा भागा भवेयुः । तद्यथा । यथोक्तविधिना लग्नशुद्धिं नवांशशुद्धिं च विचार्य अजमृगाननतौलीत्यादिवक्ष्यमाणोक्त्या लग्नादिममंशमारभ्य इष्टनवांशात्पूर्वं ये नवांशा भुक्तास्ते दशघ्नास्त्रिभक्तास्तल्लग्नराश्यधोभागाः स्युरिति राश्यादिलग्नं स्यात् ॥ ६ ॥

रात्रौ भानुर्भार्धयुक्सायनांशस्तन्व-
कांशाः स्वोदयघ्नाः पृथक्के ॥ त्रिंशद्ध-

क्ता भुक्तभोग्याः पलादि तादृक्कालो मध्यगः स्वोदयाढ्यः ॥ ७ ॥

अथाभ्यां कालमाह।रात्रौ भानुर्भार्धयुक् षड्राशियुक्तः दिवातु यथास्थितएव सायनांशः अयनांशसहितो दिवारात्रौ च अर्थाल्लग्नं च सायनांशं कार्यंतन्वर्काशाः क्रमेण भुक्तभोग्याः पृथक् स्वोदयघ्नाः त्रिंशद्भक्ताः। पलादि स्यात् । अर्थाद्भुक्तं भोग्यं च तद्यथा । तनोर्लग्नस्य भुक्तभागा लग्नोदयेन गुणिताःत्रिंशद्भक्ताःपलादि भुक्तं स्यात्।एवमर्कस्य भोग्यभागाः अर्कोदयेन गुणितास्त्रिंशद्भक्ताः पलादिकं भोग्यं स्यादिति तादृक्कालः स्वोदयाढ्यो मध्यगः स्यात् । तदिव दृश्यतेऽसौ तादृक् स चासौ कालश्च तादृक्कालः पलादिभुक्तभोग्यकालः स्वोदयैर्मध्यवर्त्तिभिरुदयैराढ्यः मध्यगः लग्नार्कयोर्मध्यवर्ती कालः स्यात् ॥ ७ ॥

तत्कालार्कन्यूनलग्नांशपिंडो भक्तःपंचक्षोणिभिर्भुक्तहोराः॥भास्वच्छुक्रज्ञें दुसौरार्यभौमाः संख्यायेरन्वारतस्ते तदीशाः ॥ ८ ॥

अथ लग्नकालमुक्त्वा लग्नात्कालहोरामाह।स चासौ कालश्च तत्कालः तत्कालेर्कः तेन न्यूनं तच्च तल्ल-

ग्नं च तस्य अंशाः तेषांपिंडःसमूहः पंचक्षोणिभिः पंच-
दशभिर्भक्तः भुक्तहोराः स्युः। तदीशाः तासां होराणा-
मीशा भास्वदादयो वारमारभ्य संख्यायेरन् गणयेरन्।
कर्मणिलिङ् । भास्वान् सूर्यः शुक्रः प्रसिद्धः ज्ञो बुधः
इंदुश्चंद्रः सौरः शनिः आर्यो गुरुः भौमः प्रसिद्धः ॥८॥

होराः क्रूराः सौम्यवर्गाधिके स्युर्ल-
ग्ने मोघाः सौम्यवारे च रात्र्याम्॥पा-
पारिष्टं निःफलं शक्तिभाजां स्यात्ष-
ड्वर्गे लग्नगे सद्ग्रहाणाम् ॥ ९ ॥

अथ पापहोराभंगमाह। सौम्यग्रहहोरा शुभा पाप-
होराशुभेति स्पष्टमर्थसिद्धं च। सौम्यवर्गैः अधिकं
तस्मिन् सौम्यवर्गाधिके लग्ने सति क्रूराः पापहोराः
मोघा निःफलाः स्युः।गृहादीन्षड्वर्गान्वाक्ष्यति । तत्र
चतुरधिकाः सौम्या वर्गाश्चेत्स्युस्तदा सौम्यवर्गा-
धिक्यमिति स्पष्टम् । किंच वारे रात्र्यां च क्रूरा होरा
मोघाः स्युः। सौम्यवारे सदा रात्रौ क्रूरवारे सत्यपीत्य-
र्थः । तथा च गर्गः । 'क्रूरवारे क्रूरहोरा न शस्ता
इह मंगले ॥ नातिदुष्टा शुभे वारे रात्रौ स्वल्पफलाम-
ता'इति।वैद्यनाथः " न लग्नं सच्चतुर्वर्गे दुष्यते कालहो-
रया"इति। एतत्प्रसंगेन अन्यस्य पापजनितस्याशुभ-
फलस्य भंगमाह। पापारिष्टमिति।पापारिष्टं पापग्रहज-

नितमरिष्टम् अशुभं निष्फलं स्यात् । कस्मिन्सति । शक्ति भाजां बलिनां सद्ग्रहाणां सौम्यग्रहाणां षड्वर्गे लग्नगे सति ॥ ९ ॥

चरार्धदेशांतरयुग्वियोगौ क्रमेण याम्योत्तरगोलगेर्के ॥ योगे पुरा रव्युदयाद्वियोगे पश्चात्प्रवृत्तिर्दिनवारकर्तुः ॥ १० ॥

एवं कालहोराणां मतांतरमुक्त्वा सर्वसंमतं वक्ष्यंस्तदर्थं तावद्वारप्रवृत्तिमाह । उपजातिका । चरार्धदेशांतरं च ग्रहगणिते प्रसिद्धं तत्र चरार्धमेव चरमुच्यते देशांतरयोजनानि स्वचतुर्थांशोनितानि तत्पलानि स्युः । तेषां चरार्धपलानां देशांतरपलानां च क्रमेण युग्वियोगौ कार्यौ कस्मिन् सति । याम्योत्तरगोलगे अर्के सति।याम्यगोले योगःउत्तरगोलके वियोग इत्यर्थः । तत्र योगे सति तैः पलैर्दिनवारकर्तुःप्रवृत्ती रव्युदयात्पुरा पूर्वं स्यात् ।वियोगे सति पश्चाद्भवेत् । अतो दक्षिण गोले सदा पूर्वं वारप्रवृत्तिरुत्तरगोले पश्चादिति दिनस्य दिवसस्य वारस्य कर्ता वार एवेति यावत् । इयमुक्ता वारप्रवृत्तिरसंगता वासनाबाह्यत्वात् । सप्तर्षिवराहादिवचनविरोधाच्च । तथाहि । लंकायां सूर्योदयात्सर्वदेशे किल वारप्रवृत्तिः । लंकायां यत् क्षितिजं तदन्यदेशे

उन्मंडलम् उत्तरगोले स्वक्षितिजादूर्ध्वमुन्मंडलं दक्षिणे त्वधः तदंतरं चरमेव । अत उत्तरगोले मध्यरेखायां स्वोदयादुपरि चरपलैर्वारप्रवृत्तिः । दक्षिणे तु पूर्वं मध्यरेखास्वदेशोदययोरंतरे देशांतरपलानि तैः पलैः रेखायाः पश्चिमदेशे ऊर्ध्वमुदयः पूर्वदेशे त्वधः । अतोऽनेन विधिना चरदेशांतरयोः संस्कारवशादूर्ध्वमधो वा वारप्रवृत्तिरिति । अत एवोक्तं सिद्धांते । अर्कोदयादूर्ध्वमधश्चेत्यादि । तथा च संहितायाम् सप्तर्षिभिश्च " उत्तरदक्षिणचरदलहीनयुता नाडिका रवेरुदयात्॥प्राक्पश्चांतरदेशांतरयोजनखाष्टांशकेनापि॥"इत्यादिअन्यैश्च 'सौम्ये गोले सवितुरुदयादि'त्यादि।अत उक्तमनेन तद्गोलवासनाविरुद्धं सप्तर्षिप्रमुखवचनैर्विरुद्धम्।अथ वक्तव्यमस्य पाठांतरमस्तीति चेत्तन्न यतःसर्वत्राप्ययमेव पाठः । अथ च वक्तव्यमस्यार्थांतरमस्तीति चेत्तदपि न।उत्तानार्थत्वे सत्यर्थांतरासंभवात् । अर्थांतरं भविष्यति चेद्विचारयंतु नास्त्येवार्थांतरम् । अथ वक्तव्यमसौ मध्यरेखायाःपश्चिमदेशनिवासी भविष्यति अतस्तेन स्वदेशाभिप्रायेणेदमुक्तमिति तदपि न।उत्तरगोले देशांतरपलेभ्यो हीने चरे सति व्यभिचारात्।तथा हि तदावयोः संस्कारे क्रियमाणे पश्चिमदेशांतरस्यावशेषत्वात्तत्तुल्यैः पलैः पूर्वमेव वारप्रवृत्तिर्भाव्या असौ तु वदति वियोगे पश्चादिति । अतः कु-

त्राप्यनालंबने सतीदं वक्तव्यम्।अनेन पश्चिमदेशनिवासित्वात्स्वदेशाभिप्रायेणेदमुक्तम् यत्तूत्तरगोलेअल्पचरे सति व्यभिचर्यंते तत्कादाचित्कत्वात्तेनोपेक्षितमिति मंतव्यम् ॥ १० ॥

द्विघ्नेष्टनाडीशरलब्धतुल्या वारप्रदेशादपि कालहोराः ॥ संख्योक्तवत्तास्वथ यद्युभाभ्यां क्रूरा कुवर्गश्च तदातिदोषः ॥ ११ ॥

अथ होरानयनम् । इंद्रवज्रा । वारप्रवेशाद्वारप्रवेशमारभ्य द्विघ्नाश्च ता इष्टनाड्यश्च ताभ्यः शरैः पंचभिः यल्लब्धं तेन तुल्याः कालहोराः कालहोरेशाः स्युः । अपि मतांतरद्योतने प्रागुक्तहोराः । स्युरेता अपि भवंतीत्यथ तासु होरासु संख्यागणना उक्तवत्स्यात् । भास्वच्छुक्रज्ञेत्यादिना अनयोर्मतयोःफलितमाह।यदीति।यद्युभाभ्यां प्रकाराभ्यां क्रूरा होरा भवेत्त कुवर्गः पापवर्गाधिक्यं च तदातिदोषो महादोषो भवेत्तदा तल्लग्नं सर्वथा त्याज्यमेवेत्यर्थः ॥ ११ ॥

गंडांतेष्वपि वैधृतावुभयतः संक्रातियामद्वयेयामार्धव्यतिपातविष्टिकुलिकभंग्नं विलग्नं जगुः॥द्विद्व्यूनामनवोर्कतः कुलकिनोव्येका मुहूर्ता निशि

त्याज्यास्तिथ्युडुवारजाश्च न परे दोषाः खशादीन्विना ॥ १२ ॥

अथैतत्प्रसंगेनान्यांश्च महादोषानाह ॥ शार्दूलविक्रीडितम्।गंडांतानि त्रिविधानि'शूलवैधृतवरीयसामि'-त्यादिना वक्ष्यमाणानि वैधृतः सप्तविंशो योगः संक्रांतेः सकाशाद्यामद्वये उभयतः संक्रांतिकालात्प्राक्पश्चाच्च षोडशघटिकास्वित्यर्थः । यामार्धमर्धयामः स तु शास्त्रांतरोक्तः 'मनीषिणोर्धप्रहराद्वितीयादित्यादिना व्यतिपातः सप्तदशो योगः विष्टिर्भद्रा सप्तमं करणं कुलिकोनंतरमेवोक्तः एतैर्गंडांतादिदोषैर्भग्नं विलग्नं जगुर्मुनयः।एष्वन्यतमे दोषे सति लग्नभंगः स्यादित्यर्थः।अत्र कुलिकमाह।द्विघ्ना इति।द्वाभ्यां द्वाभ्यामूनाः द्विघ्नाः मनवश्चतुर्दशअर्कतः सूर्यमारभ्यकुलकिनो मुहूर्ता भवंति कुलिकोस्ति येषां ते कुलकिनः रवौ चतुर्दशे मुहूर्ते कुलिकश्चंद्रे द्वादशेभौमे दशमे इत्यादि निशि तु व्येकाः रवौ त्रयोदशे चंद्रे एकादशे इत्यादि दिनस्य रात्रेर्वा पंचदशांशो मुहूर्तः प्रसिद्धः । अथैतत्प्रसंगेन अन्येषां वारादिदोषाणां विषयमाह । त्याज्या इति । ये मयात्र उक्ता दोषाःतेभ्यःपरेन्ये तिथ्युडुवारजा दोषाः खशादीन्विना नत्याज्याःआदिशब्देन हूणवंगानां ग्रहणंतिथिश्चउडुश्चवारश्चतेभ्यो जातास्तेतथा तत्र तिथिजादग्धा-

स्तिथ्यादयः नक्षत्रजा उपग्रहादयः वारजाः कंटकका-लवेलादयः ते खशादिष्वेव वर्जनीयानन्यत्रेत्यतोत्र नोक्ता इति ये त्वत्रोक्तास्ते सर्वदेशे त्याज्या इत्यर्थः ।उक्तं च'तिथ्युडुदिनपतिजाता योगा ग्राह्यास्तु हूणखशवंगैः' इत्यादि। यद्वा तिथिश्च उडु च तिथ्युडू तिथ्यडू च वारश्च तिथ्युडुवाराः तेभ्यो जातास्ते तथा तिथिवारजा नक्षत्रवारजाश्चेत्यर्थः।उक्तंचश्रीपतिना। 'विरुद्धयोगास्तिथिवारजाता'इत्यादि तिथिवारजाःसंवर्तकादयः उडुवारजाः मृत्युयोगकालदंडादयः तत्र केचिन्मृत्युयोगं सर्वदेशे त्यजंति तद्वाक्यं च 'सर्वदा सर्वदेशेषु मृत्युयोगं विवर्जयेत्'इति ॥ १२ ॥

राश्यंशाः शशिभूगुणेक्षणहतास्ति-
थ्यभ्रभूदिक्छरैर्भक्ता भार्धदृकाण-
नंददिनकृद्भागा गृहं यस्य यत्॥त्रि-
शांशाः सितसौम्यजीवरविजक्ष्माज-
न्मनां व्युत्क्रमादोजर्क्षेषु शराश्वसर्प-
मरुतः पंचेति षाड्वर्गिकाः॥ १३ ॥

अथ लग्ने षड्वर्ग शुद्धिमाह।शार्दूलविक्रीडितं।राशेः अंशाः राश्यंशाः राशिभुक्तांशाः राशीन्संत्यज्य अंशा ग्राह्या इत्यर्थः ।ते चतुर्षु स्थानेषु क्रमेण शशिभूगुणेक्षणहताः ॥ १ । १ । ३ । २ ॥ ईक्षणे द्वौ शेषाः स्प-

ष्टाः तिथ्यभ्रभूदिक्छैरैर्भक्ताः १५ । १० । १० । ५ ॥ अभ्रभुवो दशशेषाः प्रसिद्धाः लब्धानिभाधीदयो वर्गाः स्युःभार्धं होरा दृक्काणो द्रेष्काणः नंददिनकृद्भागौ नवांशद्वादशांशौ एवं चत्वारो वर्गाः यस्य ग्रहस्य यद्गृहं तस्यैव अयमेको गृहाख्यः । अथ त्रिंशांशः समराशौ सितादीनां पंचादयस्त्रिंशांशाः त्रिंशतः पूरणास्त्रिंशाः "शदंतविंशतेश्च" इति डप्रत्ययः। त्रिंशाश्चते अंशाश्च त्रिंशांशाः।तद्यथा समराशावाद्याःपंचभागाः शुक्रस्य ततः सप्त बुधस्य ततोष्टौ गुरोः ततः पंच शनेः ततः पंच भौमस्येति ओजर्क्षेषु विषमराशिषु व्युत्क्रमात् भागानामधिपतीनां च । तद्यथा आद्याः पंचभौमस्येति । ओजर्क्षेषु विषमराशिषु व्युत्क्रमात् भागानामधिपतीनां च । तद्यथा आद्याः पंच भौमस्यं ततः पंच शनेः ततोष्टौ गुरोः ततः सप्त बुधस्य ततः पंच शुक्रस्येति । अत्र सितादीनामेवोत्क्रम इति न व्याख्येयं गर्गादिवचनविरोधात् । इतीयं षड्वर्गिका स्यात् । षण्णां वर्गाणां समाहारः षड्वर्गी सैव षड्वर्गिका ॥ १३ ॥

कुजकवींदुजचंद्ररवींदुजाः सितकु-
जेज्ययमार्कजसूरयः ॥ भवनपा ल-
वपाश्च तदादयस्त्वजमृगाननतौलि-
कुलीरकाः ॥ १४ ॥

अथ सौम्यपापवर्गज्ञानाय राश्यधिपानाह॥ द्रुतविलंबितम्।कुजादयो भवनपा राश्यधिपाः स्युः मेषादीनां द्वादशराशीनां कुजादयो द्वादशयोर्द्वादशक्रमेणाधिपाः स्युरित्यर्थः।एवं गृहाधीशाः।अथ नवांशस्य एते लवपाः नवांशपतयश्च स्युः । नवांशराशेरप्यधिपाः स्युरित्यर्थः । तमेव नवांशराशिमाह । तदादयइति । तस्य नवांशस्योदयः प्रथमाः अजमृगाननतौलिकुलीरकाः स्युः मेषराशौ प्रथमनवांशो मेष एव वृषे मकरः मिथुने तौली कर्के कर्कट एव एवं पुनः सिंहे मेषः कन्यायां मकर इत्यादि । एवं प्रथमनवांशं ज्ञात्वा तमारभ्य प्रागानीतभुक्तनवांशान् गणयित्वा वर्तमाननवांशराशिः स्यात्।तदधिपो नवांशाधिपतिरिति ॥ १४ ॥

होरे समेऽब्जखगयोर्विषमे रवींद्वो-
र्द्रेक्काणकाः प्रथमपंचनवेश्वराणा-
म् ॥ स्युर्द्वादशांशपतयः स्वगृहाच्छु
भानि भानि ग्रहाश्च निजमित्रशुभांशभाजः ॥ १५ ॥

अथ होरादीनाह।वसंततिलका।समे समराशौ अब्जखगयोर्होरे स्तः अब्जश्चंद्रः खगः सूर्यः'खगः पूषा गभस्तिमान्' इत्यभिधानात्।विषमे राशौ क्रमेण होरे स्तः प्रागानीतलब्धवशात्समे राशौ प्रथमा होरा चंद्रस्य

द्वितीया सूर्यस्य विषमे प्रथमा सूर्यस्य द्वितीयें-दोरित्यर्थः । अथ द्रेक्काणाधीशाः । द्रेक्काणकाइति । स्वगृहात्प्रथमपंचनवेश्वराणां द्रेक्काणाः स्युः । तद्यथा । यदा शून्यं लब्धं तदा प्रथमो वर्तमानः । यदा एकं तदा द्वितीय इत्यादि अनेन विधिना प्रथमो द्रेक्काणो राश्यधिपस्यैव द्वितीयस्तस्माद्राशेः पंचमाधिपस्य तृतीयो नवमराश्यधिपस्येति । अथ द्वादशांशः स्वगृहात्द्वादशांशपतयःस्युः । स्वीयलब्धवशात् द्रेक्काणवत् त्रिंशांशानां स्वामीन एवोक्ताः । एवं षड्वर्गाधीशा उक्ताः अथैषां शुभत्वमाह।शुभानीति । शुभानां सौम्यग्रहाणां भानि राशयः शुभानि स्युः यद्वर्गस्य राशेरधिपः शुभः स्या-दित्यर्थः । न केवलं राशिः किंतु ग्रहाश्च निजमित्रशुभांशभाजः शुभाः । निजश्च मित्रं च शु-भश्च तेषामंशो नवांशः तं भजंति ते तथा स्वसुहृच्छु-भानां नवांशस्थिता इत्यर्थः । वर्गराशेरप्यधिपः एवं विधस्तदैव वर्गःशुभ इतिभावः ॥ १५ ॥

भजेत भुक्त्यंतरभुक्तियोगैः पृथक्पृ-
थक्षष्टिगुणान्गुणाग्रीन् ॥ तिथी-
भयोगान्तरनाड्यइंदोः पुण्या रवेः पु-
ण्यतमास्त्विनाःस्युः ॥ १६ ॥

अथ तिथ्यादीनां संधिकालमाह । उपजातिका । षष्टिगुणान् गुणाग्नीन् पृथक्पृथक् भुक्त्यंतरभुक्तियोगैः भजेत् क्रमेण तिथीभयोगांतरनाड्यः स्युः । भुक्त्यंतरंच भुक्तिश्च भुक्तियोगश्च ते तथा । चंद्रार्कयोर्भुक्त्यंतरं भुक्तिश्चंद्रस्यैवयोगश्चंद्रार्कभुक्तियोगःतद्यथा त्रयस्त्रिंशतं षष्ट्यासंगुण्य त्रिधा संस्थाप्य क्रमेण चंद्रार्कभुक्त्यंतरेण चंद्रभुक्त्या चंद्रार्कभुक्तियोगेन च विभज्य तिथिनक्षत्रयोगानां संधिनाड्यः स्युरित्यर्थः । तिथिशब्दस्य स्त्रीलिंगेऽपि सत्त्वात् "कृदिकारात्" इति ङीपिकृते तिथीति सिद्धम्। उक्तं च सिद्धांते। शशितनु विकलाभ्य इति। एता एव मध्यगत्या आनीय वक्ष्यति नक्षत्रयोगेत्यादिना । चंद्रार्कयोः संक्रमणकालमाह । इंदोरिति । इमा अनेनैव प्रकारेण साधिता अंतरनाड्यः इंदोः पुण्या रवेस्तु पुण्यतमाः स्युः । एतदुक्तं भवति । रवेश्चंद्रस्यापि बिंबं त्रयस्त्रिंशत्कलाः अतोऽनयैव रीत्या त्रयस्त्रिंशतं षष्ट्या संगुण्य स्वस्वगत्याविभज्य अंतरकालः स्यात् । स चंद्रस्य पुण्यः रवेस्त्वातिशयितः पुण्यः । अयं कालो नक्षत्रयोराश्योर्वा अंतराले भवेत् संक्रमणकाले इत्यर्थः ॥ १६ ॥

कुजादिकानामपि बिंबलिप्ताः खषड्गु
णाः स्वस्वजवेन भाज्याः ॥ नाड्या-

दिकः संक्रमणांतरालकालः स्फुट-
स्तत्स्फुटभुक्तिबिंबे ॥ १७ ॥

अथ भौमादीनामपि संक्रमणकालमाह । उपजातिका । कुजादिकानां भौमादीनामपि प्रागुक्ता बिंबलिप्ताः खषड्गुणाः स्वस्वजवेन स्वस्वगत्याभाज्याः संक्रमणांतरालकालो नाड्यादिको भवेत् । अत्र बिंबानि मध्यान्येवोक्तानि।तेभ्यः कृतोयः संक्रमणकालः सोऽपि मध्यो भवेत् । तत्स्फुटभुक्तिबिंबैः स्फुटः स्यात् । तेषां भौमादीनां ग्रहगणितोक्त्या स्फुटभुक्तिभिः स्फुटबिंबैश्च स्फुटकालः स्यात् । एषांसंधिकालादीनामर्धं तदंतादुभयत्रेत्यर्थसिद्धम् ॥ १७ ॥



रवैर्भवेदेकगृहाधिकस्य यदंशवृंदं
खलु सायनस्य ॥ यदत्र राशिद्वय-
भागतष्टलब्धं वसंतादृतवो भवंति॥१८॥

अथ ऋत्वादिसंधीन्विवक्षुः ऋत्वानयनं तावदाह॥ उपजातिका । एकगृहाधिकस्य एकराशियुक्तस्य सायनांशस्य अयनांशसहितस्य रवेर्यदंशवृंदं भागसमूहो भवेत् तद्राशिद्वयभागैः षष्टिभिस्तष्टं भक्तं यल्लब्धं ते वसंताद्वसंतमारभ्य ऋतवो भवंति । मृगादिराशिद्वयभोगादित्युक्त्या मीनादौ

वसंतारंभः । अत उक्तम् । एकगृहाधिकस्येति । यावद्भिरंशैरयनच्युतिः स्यादित्युक्तत्वात्सायनस्येत्युक्तम् । एवं केचिहत्वयनादीनि सायनार्कादिच्छंति तदभिप्रायेणेदमुक्तम् । केचितु केवलादेव उभयादपि । केचित्कालनिर्णयकारादयः ॥१८॥

तत्संधयोऽगांगघटीसमाः स्युर्द्धिसंगुणाश्चेद्विषुवायनीयाः ॥ स संधिसंधिः खलु यत्र शेषः शून्यं भवेदेष विशेषपुण्यः ॥ १९ ॥

अथ ऋत्वादीनां संधिकालमाह । तेषामृतूनां संधयः अंगांगघटीसमाःषट्षष्टिघटिकातुल्याः स्युः । तदंतास्त्रयस्त्रिशद्घटिकाः पूर्वं पश्चाच्चेत्यर्थः । चेद्विषुवायनीयास्तर्हि द्विसंगुणाः द्वात्रिंशदधिकशतघटिकाः इत्यर्थः । विषुवं च अयनं च विषुवायने तयोरिमा विषुवायनीयाः विषुवं मेषतुलासंक्रमौ अयनं कर्कटमकरसंक्रमौ तत्पूर्वपश्चाच्च षट्षष्टि घटिका इत्यर्थः।यत्र काले इति शेषः । शून्यं भवेत्।राशिद्वयभागतष्टामिति क्रियमाणे यदा शून्यं शेषं भवेत् । एकस्यांतोऽन्यस्यादिरित्यर्थः । ससंधिसंधिर्भवेत् संधेरपि संधिः संधिसंधिः एष कालःविशेषपुण्यः अतिशयितपुण्यः ।

अत्र संधिसंधौ पुण्ये विशेषग्रहणात्संधिकाले साधारणपुण्यमस्तीति सूचितम् ॥ १९ ॥

संधौ पुरंध्री शुचमेति वंध्या मृतप्रजावा यदि संधिसंधिः ॥ वदंति वात्स्या ऋतुना विमूढा निशीथमध्यंदिनसंधिषूढाम् ॥ २० ॥

अथैषां संधीनां फलमाह । उपजातिका । संधौ तिथिनक्षत्रादिसंधिकाले पुरंध्री स्त्री शोकमेति प्राप्नोति । यदि संधिसंधिस्तदा पुरंध्री वंध्या मृतप्रजा वा भवेत् । अथैतत्प्रसंगेन मध्यंदिनमध्यरात्रसंधिकालयो फलमाह। वदंतीति। निशीथमध्यंदिनसंधिषु ऊढां विवाहितामृतुनाविमूढामार्तवरहितां वात्स्या मुनयो वदंति वत्सस्यापत्यानि वात्स्याः निशीथोर्ध्वरात्रः मध्यं दिनस्येति मध्यंदिनं तेषां संधयः। तत्परिमाणमुक्तं ग्रंथान्तरे।" मूर्तः कालो निवसति महानिशायां च दिनदले यस्मात् ॥ दश पूर्वं दश परतस्तस्माद्वर्ज्यानि च पलानीति ॥ २० ॥

शूलवैधृतवरीयसां च यत्पंचमेषु च तिथिष्ववांतरे ॥ रेवतींद्रफणिभोद्भवं तदप्यागताद्द्विगुणमुत्सृजेत्सुधीः ॥२१

अथ शूलादियोगसंधीनां विशेषमाह ॥ रथोद्धतम् । शूलश्च वैधृतश्च वरीयांश्च एषां योगानां यत्प्रागागतमवांतरं यच्च पंचमेषु तिथिषु पंचमीदशमीपंचदशीषु यच्च रेवतींद्रफणिभोद्भवं रेवतीज्येष्ठाश्लेषोद्भवं तदपि आगतादेवांतराद्द्विगुणं सुधीः उत्सृजेत्यजेत् । एतेषां मतादेतत्तुल्यं पूर्वं पश्चाच्चेत्यर्थः ।एतद्गंडांतसंज्ञम् ॥ २१ ॥

नक्षत्रयोगतिथिसंधिषु नाडिकैका
तिथ्यष्टविंशतिपलैः सहितोभयत्र ॥
कर्कालिमीनतनुसंधिषु दिक्पलानि
त्याज्यानि शेषविवरेष्वपि पंच पंच ॥२२॥

अथ तिथ्यादीनां संधिव्यवहारार्थं मध्यगत्यानीय पठति। वसंततिलका । नक्षत्रयोगतिथीनां संधिषु एका नाडिका क्रमेण तिथ्यष्टविंशतिपलैः सहिता उभयत्र पूर्वं पश्चाच्च त्याज्या । एका नाडिका पंचदशपलैः सहिता उभयत्र पूर्वं पश्चाच्च त्याज्या । एका नाडिका पंचदशपलैः सहिता नक्षत्रसंधिः ।अष्टपलैः सहिता योगसंधिः । विंशतिपलैः सहिता तिथिसंधिरित्यर्थः । लग्नसंधिमाह। कर्कालीति । कर्कालिमीनतनूनां कर्कवृ-

श्चिकमीनलग्नानां संधिषु दिक्पलानि दशपलानि उभयत्र त्याज्यानि । एषाम् अंतात्पूर्वं पश्चाच्चेति शेषाणां वृषादिलग्नानां विवरेषु संधिषु पंच पंच पलानि उभयत्र त्याज्यानि । एष संधिरंशानामपि ज्ञेयः । लग्नोपलक्षणात् ॥ २२ ॥

अमा तिथिः पार्श्वतिथिद्वयेन समं
न मांगल्यमुपादधाति ॥ लोकंपृ-
णस्तत्र तिथेः प्रणेता यस्मान्न पीयू-
षवपुर्वपुष्मान् ॥ २३ ॥

अथ माससंधिमाह । उपजातिका । अमा अमावास्या तिथिः पार्श्वयोस्तिथिद्वयेन समं सह । 'साकं सार्द्धं समं सह' इत्यमरः । चतुर्दशीप्रतिपत्सहितेत्यर्थः । मांगल्यं न उपादधाति न धारयति । अत्र हेतुमाह । लोकमिति । यस्मात्कारणात्तत्र तस्मिन् तिथित्रये लोकंपृणश्चंद्रमाः लोकं पृणाति असौ लोकंपृणः पृपालनपूरणयोः । कर्तरि शः शित्वात् " लोकस्य पृणे " इति मुम् । तिथेः प्रणेता प्रवर्तकः पीयूषवपुरमृतशरीरः वपुष्मान् प्रशस्तं वपुर्यस्यासौ वपुष्मान्नास्ति । चतुर्दश्यादिषु कृष्णपक्षे एवंविधस्य चंद्रस्य अस्तं गतत्वादित्यर्थः । चंद्रो ह्यमृतकिरणो लोकाप्यायकस्तिथिप्रवर्त्तक इति ॥ २३ ॥

उदेति चायं प्रतिपत्समाप्तौ कृशोऽपि वर्धिष्णुतया प्रशस्तः ॥ द्वीपांतरस्थो विफलोऽपि तावद्यावन्न पृथ्वीनयनाध्वनीनः ॥ २४ ॥

अन्यैश्चंद्रबाल्यत्वाद्वितीया निषिद्धा तन्मतं निषेधयन् किंचिद्विशेषमाह । उपजातिका । अयं चंद्रमाः प्रतिपत्समाप्तौ प्रतिपदंते उदेति च । सामीप्ये सप्तमी । प्रतिपदंते तत्समीपे वेत्यर्थः। दृक्कर्मादिसंस्कारवशात् स उदितश्चंद्रः कृशोऽपि वर्धिष्णुतया हेतुना प्रशस्तः वर्धनशीलो वर्धिष्णुः तस्य भावस्तया । यथा शिशुर्वर्धमानतया प्रशस्यते तद्वच्चंद्रोऽपीत्यर्थः । अतोऽस्य बालत्वदोषो नास्तीति सूचितं तस्यापि विशेषमाह । द्वीपेति । द्विगता आपो यस्मिन् तद्वीपं तस्मादन्यद्वीपं द्वीपांतरं तत्र तिष्ठतीति द्वीपांतरस्थः । देशांतरदृष्ट इत्यर्थः। देशांतरदृष्टश्चंद्रस्तावद्विफलः तावत्कथं यावत्पृथ्वीनयनाध्वनीनो नास्ति । पृथ्वीशब्देन तत्रस्था जना लक्ष्यंते तेषां नयनानि पृथ्वीनयनानि तेषामध्वा मार्गस्तस्मिन्नलं गच्छतीति पृथ्वीनयनाध्वनीनः। "अध्वनोयत्खौ" इत्यलंगाम्यर्थे खः।"आत्माध्वानौ खे" इत्यतः प्रकृतित्वम्।यद्वा।पृथ्वीनयनाध्वानिइनः समर्थः पृथ्वीनयनमार्गे क्षम इति।एतदुक्तं भवति।शास्त्रेण दृष्ट-

श्चंद्रो देशांतरदृष्टः । इदं 'लंकापुरेऽर्कस्ययदोदयः स्यात्तदा दिनार्धं यमकोटिपुर्याम्' ।इत्यादि गोलवासनया प्रसिद्धम् । अतः स्वदेशभूमिस्थितैर्जैनैर्यावन्नदृष्टस्तावद्विफल इत्यर्थः । अभ्रादिना तु अदर्शने न दोष इति प्रसिद्धमेव ॥ २४ ॥

नो जन्ममासतिथिभेषु न चाधिकोने मासे तिथौ च पृथु मंगलमामनंति ॥ यज्ज्येष्ठगर्भजमपत्यमुपेतमेतज्ज्येष्ठे महोत्सवमवश्यमियान्न वृद्धिम् ॥ २५ ॥

अथ जन्ममासादीनां निषेधमाह । वसंततिलका । जन्मनि मासातिथिभानि तेषु जन्ममासि जन्मतिथौ जन्मनक्षत्रे वेति पृथु मंगलं चौलोपनयनविवाहादिकं नो आमनंति न कथयंति।न च अधिकोने मासे आधिमासे क्षयमासे चेति अधिकोने तिथौ च दिनवृद्धौ दिनक्षये वेति ज्येष्ठमासस्य विशेषमाह । यज्ज्येष्ठेति । यज्ज्येष्ठगर्भजमपत्यं पुत्रः कन्या वा तज्ज्येष्ठे मासे महोत्सवं चौलोपनयनविवाहादिकमुपेतं प्राप्तं तदवश्यं वृद्धिं न इयात् न प्राप्नुयात्।ज्येष्ठमासे मंगलं शुभन्नेत्यर्थः॥२५॥

इत्यतींद्रियदृशो निरूचिरे यद्गुणागुणमयं मुनीश्वराः॥दैवविद्विदितजन्मतन्मतः कीर्तिभाग्भवति लग्नलग्नधीः ॥ २६ ॥

अथैषां गुणदोषाणां विवेककर्तुः प्रशंसामाह ।रथोद्धतम्। इति यदुक्तं गुणागुणमयं गुणाश्च अगुणाश्च गुणागुणाः तैः प्रचुरं गुणागुणमयमतींद्रियदृशो दिव्यद्रष्टारो मुनीश्वराः निरूचिरे निजगदुः । विदितजन्मतन्मतः लग्नलग्नधीः दैववित्कीर्तिभाग्भवति । तच्च तन्मतमस्य तच्छब्दस्य पूर्वेण यच्छब्देनान्वयः।जन्म च तन्मतं च जन्मतन्मते विदिते जन्मतन्मते येनासौ तथा। एवंविध गुणदोषविचारचतुरो लग्ननिहितैकबुद्धिः कीर्तिमान् भवतीत्यर्थः॥ २६ ॥

इति विवाहवृंदावने लग्नषड्गर्गाध्यायोऽष्टमः ॥ ८ ॥

इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मज गणेशदैवज्ञविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायांलग्नषड्वर्गादिशुद्धचधिकारोऽष्टमोऽध्यायः ८

अथ गोधूलिकाध्यायः ॥ प्राचीं कुंकुमचर्चितामिव दिशं मुक्ताफलस्र-

ग्विणीं कौसुंभांशुकभासिनीमिव दिशं प्राचेतसीं दर्शयन् ॥ यावद्याति करग्रहं सह रविः संध्याकुरंगीदृशा तावन्मंगलमंगलग्नसुरभीरेणोः करं गृह्णतः ॥ १ ॥

एवं सर्वलग्नानां शुद्धिमभिधायेदानीं गोधूलिकलग्नविशेषशुद्धिरारभ्यते। तत्र तावत्तस्य कालं दर्शयन्स्वकविताकौशलं दर्शयति। शार्दूलविक्रीडितम्। तावत्पर्यंतमंगलग्नसुरभीरेणोः कुमार्याः करं पाणिं गृह्णतः स्वीकर्तुः पुरुषस्य मंगलं भवति सुरभीणां धेनूनांरेणुः धूलिः सुरभीरेणुः। अंगेषु लग्नाः संसक्ताः सुरभीरेणवो यस्याः सा तथा। धेनुधूलिधूसराया इत्यर्थः। तावत्कथं यावद्रविः सूर्यः संध्याकुरंगीदृशा सह करग्रहं याति कुरंग्या दृगिव दृग्यस्याःसा तथा मृगलोचना संध्येव कुरंगीदृक् संध्याकुरंगीदृक् तया। अत्र संध्या सायंसंध्यैव तत्र सुरभीरेणूनां संभवात् किं कुर्वन्सन्। कुंकुमचर्चितामिव प्राचीं दिशं प्रति आत्मानं दर्शयन्। इवोत्प्रेक्षायाम्। कुंकुमेन चर्चिता। मंडिता दृशेर्णिजंतत्वाद्विकर्मकत्वम्। सायंकाले प्राच्यां कुंकुमसदृशः स्वाभाविकः संध्यारागः स कुंकुममिवेत्युत्प्रेक्षा। कथंभूतां प्राचीं मुक्ताफलस्रग्विणीं मुक्ताफलानां स्रक्

मुक्ताफलहारःसोस्ति यस्याः सा मुक्ताफलस्रग्विणी ताम् । मत्वर्थीयो विनिः। अर्थान्नक्षत्रमालैव मुक्ताफलस्रक्कामिव दर्शयन् प्राचेतसीं दिशमिव प्रचेतसो वरुणस्येयं प्राचेतसी तां प्रतीचीम् । इव यथार्थे । यथा प्राचीं तथा प्राचेतसीमिति । तेन प्राचीदिशं प्राचेतसीं च दिशं दर्शयन्निति भावः। कंथंभूतां प्राचेतसीम्। कौसुंभांशुकभासिनीं कुसुंभ्याः पुष्पाणि कुसुंभानि तैरक्तं कौसुंभं तच्च तदंशुकं च तेन भासते सा तथा । अर्थात्संध्याराग एव कौसुंभांशुकमिति । यद्वा कौसुंभांशुकमिव भासते सा यावत्सायं संध्याकाले एतादृशः संध्यारागः सुरभीरेणवश्चदृश्यते तावत्काले करग्रहकर्तुर्मंगलं स्यादिति तात्पर्यार्थः ॥ १ ॥

उत्कर्णतर्णकविलोकनवल्गुवल्गत्पी
नस्तनोद्धृषितदुर्धरधेनुधूलिः ॥ गो-
धूलिकं सृजति गोपगृथग्जनानां
दोषैर्महद्भिरपि लग्नमनूनमन्यैः॥ २ ॥

अथ गोधूलिकप्रशंसां तदधिकारिणश्चाह । वसंततिलका पंच श्लोकाः। उदूर्ध्वौ कर्णौ येषां ते उत्कर्णाः ते च ते तर्णकाश्च तर्णका वत्साः तेषां विलोकनं तेन वल्गवः शोभमानाः वल्गंति ता वल्गंत्यः

वल्गनं गतिविशेषः पीना मांसलाः स्तना यासां ताः पीनस्तनाः उदुत्कर्षेण हृषिताः संतुष्टा उद्धृषिताः । हृषेर्निष्ठायां वेङ्कत्वम् दुःखेन धर्तुं शक्यंते ताः दुर्धराः उत्कर्णतर्णकविलोकनेन वल्गवश्च ता वल्गंत्यः पीनस्तना उद्धृषिता दुर्धराश्च ता धेनवश्च तासां धूलयस्तास्तथा ताः । कर्मगोधूलिकं लग्नं कर्तृ गोपपृथग्जनानां सृजत्युत्पादयति ददातीत्यर्थः । गवां धूलयस्तत्र भवं तदुपलक्षितकाले जातं लग्नं तद्गोधूलिकं गोपाः पशुपालकाः पृथग्जना हीनवर्णाः गोपादीनां गोधूलिलग्ने एवंविधधेनवो भवंतीति भावः । अस्य प्राशस्त्यमाह । दोषैरिति । कथं भूतलग्नम् अन्यैर्महद्भिर्दोषैः अनूनं सहितमपि । अयं भावः । गोधूलिकलग्ने सदा सप्तमः सूर्योऽस्त्येव । अयं महादोषः । मदनमूर्तिशय इत्युक्तत्वात् । एतदन्यैर्महादोषैरष्टमभौमादिभिः सहितमपि लग्नं शुभं भवेदिति ॥ २ ॥

गोधूलिकेऽपि विधुमष्टमषष्ठमूर्तिं य-
न्मोचयंति तदयं स्वरुचिप्रपंचः ॥
पंचांगशुद्धिमयमेव विवाहधिष्ण्यैर्य-
स्मादिदं सततमस्तगते पतंगः ॥३॥

यद्येवं तर्हि केचित्षष्ठाष्टमचंद्रे सति लग्नस्य भंगमाहुस्तन्निरस्यति । गोधूलिकेऽपि अष्टमषष्ठमूर्तिं विधुं

यत्केचिन्मोचयंति त्याजयंति । तत्तस्मात्कारणादयं स्वरुचिप्रपंचःअष्टमं च षष्ठंच अष्टमषष्ठे तयोर्मूर्तिर्देहो यस्यासौ तथा । अष्टमषष्ठस्थित इत्यर्थः । तद्वाक्यं च 'जामित्रं न विचिंतयेद्ग्रहयुतम्' इत्यादि ।'हित्वा चंद्रमसं षडष्टमगतं गोधूलिकं शस्यते 'इति । अयं स्वरुचेः स्वस्याभिरुचेः प्रपंचो विस्तारः । यद्वा स्वरुच्या कृत्वा प्रपंचो व्यामोहनं जनानाम् । तस्मात्कुतः यस्मादिदं गोधूलिकं विवाहधिष्ण्यैः सह पंचांगशुद्धिमयमेव पंचांगशुद्ध्या प्रधानं पंचांगशुद्धिमयं गोधूलिकेविवाहनक्षत्रेषु सत्सु पंचांगशुद्धिरेव मुख्या नत्वन्य ल्लग्नशुद्ध्यादिकमिति। पंचांगादीनि तिथ्यादीनि प्रसिद्धानि । तेषां शुद्धिः स्वाभाविकदोषविरहः।यथा रोहिण्यादिषु विवाहे हितत्वात् । तर्हि विवाहधिष्ण्यैरिति पौनरुक्त्यं तन्नक्षत्रस्य प्राधान्यात् । उक्तधिष्ण्यमधिकृत्य पंचांगशुद्धिर्विलोक्येत्यर्थः । एतदग्रे प्रपंचयिष्यामः । एतत्कथं यस्मात्कारणादिदं गोधूलिकं सततं नित्यमस्तगते सप्तमगते पतंगे सूर्ये सति भवेत् । एतादृशे महादोषे गृहीते सति किं त्वन्ये षष्ठाष्टमचंद्रादय इति भावः । अनेनैव अष्टमभौमादयोपि निराकृताः ॥ ३ ॥

नांशो न लग्नमिह दृष्टयुतं स्वभर्त्रा
नार्कीरसौरतमसामपि संगभगः ॥

किं चंद्रचारभयमेकमिहास्तु किं-
चिन्नात्र प्रमाणवचनं किमपि श्रुतं नः॥४॥

किंच इहास्मिन्गोधूलिके अंशो नवांशः स्वभर्त्रा स्वस्वामिना दृष्टयुतो नास्तु लग्नं च स्वभर्त्रा दृष्टयुतं नास्तु अर्कारसौरतमसां सूर्यभौमशनिराहूणां संगो योगस्तेन भंगो लग्नभंगः सोपि नास्तु। एवं सत्येकं चंद्रचारभयं किमस्तु। चंद्रस्यचारस्तस्माद्भयं हित्वा चंद्रमसं षष्ठाष्टमगतमिति।एतदेकं कथमस्त्विति। अपितु तदपि नास्तु। नन्वत्रागमऽएव प्रमाणमिति चेत्तत्राह। किंचेति। किंच अन्यच्च अत्रास्मिंश्चंद्रचारविषये वो युष्माकं प्रमाणवचनं किमपिन श्रुतम् अस्मिन्विषये यद्वाक्यं प्रमाणीकर्तव्यं तादृशं महर्षिसंमतवाक्यं नास्तीति भावः ॥ ४ ॥

सार्के शनौ विरविचित्रशिखंडिसूनौ
तत्केवलं कुलिकया मदलोपलंभात्॥
प्रायेण शंकरभुवामशुभर्क्षपक्षक्रूरक्ष-
णेषु शुभकृत्करपीडनं स्यात् ॥ ५ ॥

तर्ह्यत्र किं विलोक्यमिति आह। तद्गोधूलिकं शनौ शनिवारे सार्के कार्यं हस्ये रवौ सतीति चित्रशिखंडिनः सूनौ गुरुवारेपि कार्यं। विगतो रविर्यस्मिंस्तद्विरवि

अस्तंगतेऽर्के सतीति कस्मात् कुलिकयामदलोपलंभात् कुलिकश्च यामदलं च तयोरुपलंभः प्राप्तिः शनौ हि रात्रौ प्रथममुहूर्ते कुलिकः अतः सार्के गुरौ तु अष्टमयामार्धमतो विरवीति केवलमिदमेव पंचांगमध्ये वारदोषसद्भावात् ।नत्वन्यादिति।एतत् किं तत्राह । प्रायेणेति । संकरेण जातिसंकरेण भवंति ते संकरभुवः तेषां हीनवर्णानां करपीडनं प्रायेण बाहुल्येन अशुभर्क्षपक्ष क्रूरक्षणेषु शुभकृत्स्यात् । ऋक्षं च पक्षश्च ऋक्षपक्षौ अशुभौ च तौ ऋक्षपक्षौ च तौ तथा । क्रूरश्चासौ क्षणश्च स तथा । अशुभर्क्षपक्षौ च क्रूरक्षणश्च ते तथा । एतदुपलक्षणाद्दुष्टवारयोगादिष्वपि । एष्वपि हीनवर्णानां पाणिपीडनं शुभं किं पुनः पंचांगशुद्धाविति भावः । तथाच शौनकः "अंत्यानामशुभर्क्ष"इत्यादि॥८॥

अत्रोभयत्र घटिकादलमिष्टमाहुर्ग्राह्यस्तदंबरमणेरपि नार्धबिंबः ॥ कालार्गलानियतये तपनार्धबिंबवेलाव्यवस्थितिरियं रचयांबभूवे ॥ ९ ॥

यदुक्तं सार्कमित्यादितत्परिमाणमाह ।अत्रास्मिन् गोधूलिके यस्मात्कारणादुभयत्र अर्धास्तमयात्प्राक्पश्चाच्च घटिकादलमिष्टमाहुः । तत्तस्मात्करणादंबरमणेः

सूर्यस्य अर्धबिंबोपि कालो न ग्राह्यः । अर्धबिंबं काले यस्मिन्स तथा । तर्हि तद्वाचकवाक्यानामर्धोदिते-र्धास्तमिते सूर्यबिंबे हृशंगत इत्यादीनां गतिमाह। कालार्गलेति । इयं तपनार्धबिंबवेलाव्यवस्थितेःकालार्गलार्गलानियतये मुनिभिः रचयांबभूवे अरचि। णिजंताद्रचतः कर्मणि लिटि भुवोनुप्रयोगः तपनस्य अर्धबिंबं तस्य वेला कालः तस्य व्यवस्थितिरवस्थानं कालस्य अर्गला तस्या नियतिर्नियमः इयमर्धबिंबात्मिका वेलाव्यवस्थितिः कालमध्यनियमाय रचिता किंतु तत्पूर्वं तत्पश्चाच्च कालांतरमस्ति अर्धघटिकात्मकवाक्यांतरदर्शनादिति भावः।तथा चाहुः "दिनांते सूर्यबिंबार्धपूर्वं पश्चाद्धटीदलम् । कालार्गलेव वेलायां धात्रोद्वाहाय निर्मितेति "। अत्र गोधूलिकेपि विधुमष्टमषष्ठेत्यादि यदुक्तं ग्रंथकृता तत्सम्यग्विचारपदवीं नाधिरोहति। तथाहि यदुक्तोत्र हेतुः पंचांगशुद्धिमयमेव विवाहधिष्ण्यैरित्यादिना तत्र पृच्छते केयं पंचांगशुद्धिरिति पंचांगानि तिथ्यादीनि प्रसिद्धानि नारदवसिष्ठादिभिः पंचागशुद्धिविरहदोषस्त्वाद्यः इत्यादिना महादोषप्रकरणेभिहितानि तेषां शुद्धिर्दोषविरहः दोषो द्विधैव प्राकृतिक आगंतुकश्चेति यस्मिन्कर्मणि यदभिहितं न तिथ्यादिकं तस्मिन्प्राकृतिका दोषः यथा विवाहे दर्शव्यतिपातभरण्यादौ

आगंतुको ग्रहादिजनितः यथातिथौ दग्धत्वं नक्षत्रे पापवेधादिकमिति । अतः पंचांगानांप्राकृतिकदोष- एवात्र शुद्धिः । नत्वागंतुकदोषविरहः । तस्य योगकरणयोरनभिधानात् । अपि च शुद्धिशब्देन आगंतुकदोषविरहे उच्यमाने वारदोषः " खार्जूरिकस- मांघ्रिभमि"त्यादि नारदादिपठितेषु दोषेषु पौनरु- क्त्यापातिः । एकविंशतिपरिगणनाया असंभवश्च तस्मात्पंचांगानां प्राकृतिकदोषविरह एव शुद्धिरिति स्थितम् । अत एवंविधा या पंचांगशुद्धिस्तन्मयमेव गोधूलिकम् । इत्युक्तं भवति । अथ यदीदृशं ब्रूषे पंचांगशुद्धिमयमेव विवाहधिष्ण्यैरिति वदतोयमाशयः विवाहविहितनक्षत्रे सति पंचांगानां ग्रहादिजनितदो- षाभावलक्षणा शुद्धिर्विवक्षिता तदपिन । योगक- रणयोस्तस्यासंभवात्। यथासंभवमिति चेत्तद पि नपं- चपदस्य वैयर्थ्यात् । अतः शुद्धिशब्देन प्राकृतिकदो षाभावः स्वीकर्तव्यस्तर्हिपंचांगशुद्धिबाह्यैः सार्के श- नावित्यादिना कुलिकार्धयामौ कथं त्यजेते वारदो- षादिति चेत्तत्र नारदवासिष्ठादिभिः पंचांगशुद्धिविरह- इत्यादिपठितदोषेषुवारदोषस्य पृथक्ग्रहणात्।तर्हि"कु लिकं क्रांतिसाम्यं चे"त्यागमबलात्कुलिकार्धयामौ त्य- ज्येते। यद्येवंषष्ठाष्टमचंद्रेण किमपराद्धं सोप्यागमबला- त्त्यज्यते । नात्र प्रमाणवचनं किमपि श्रुतमपिचेत्तद-

पि न यत आगमप्रमाणवाक्यानि संत्येव "षष्ठेष्टमे मूर्तिगते च चंद्रे गोधूलिके मृत्युमुपैति कन्या॥कुजेष्टमे मूर्तिगतेथवास्ते वरस्य नाशं प्रवदंति गर्गाः॥ धिष्णं क्रूरयुतं त्याज्यं मूर्तौ षष्ठाष्टमे चंद्रं। कुजं रंध्रास्तलग्नगं विनारंध्रं शुभैर्युक्तंगोधूलंशुभदं भवेदि"त्यादीनि। एतान्यबहुसंमतानीति चेत्तदपि न।'प्रत्याख्येयः पाक्षिकोपीह दोष' इत्युक्तत्वात् । किमुत बहूक्तेः। अतः षष्ठाष्टमचंद्रादयो गोधूलिके उक्तदोषास्तेपि त्याज्या इति सिद्धं ॥ ६ ॥

इति विवाहवृंदावने गोधूलिकाध्यायो नवमः ॥९ ॥

इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशदैवज्ञविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां गोधूलिकाध्यायो नवमः ॥ ९ ॥

अथ मासगोचरविचाराध्यायः॥ चैत्रे मासि प्रतिपदि तिथौ वासरेऽर्कस्य सर्वैर्मेषादिस्थैर्गगनगतिभिर्भूर्भुवः स्वःप्रवृत्तिः ॥ एवं पौषे मृगमुखगते भास्वति स्यान्न चासावुक्तः श्रेयान्परिणयविधाविंदुमासोस्ति तस्मात्॥१॥

अथ विवाहमासगोचरविचाराध्यायो व्याख्यायते तत्रादौ सौरचांद्रमासयोर्विचारमाह । मंदाक्रांता । यस्मात्कारणाच्चैत्रे मासि शुक्लप्रतिपदि तिथौ रवेर्वासरे सर्वैर्गगनगतिभिः रव्यादिग्रहैः मेषादौ स्थितैर्भूर्भुवः स्वः प्रवृत्तिः आसीत् । भूर्भुवःस्वरित्यव्ययानि । क्रमेण लोकत्रयवाचकानि । तथा चोक्तं 'भूर्लोकाख्यो दाक्षिणे व्यक्षदेशात्तस्मात्सौम्योयं भुवः स्वश्च मेरुः' इति । अतः पृथिवी एतल्लोकत्रयाधिष्टिता एषां लोकानां प्रवृत्तिः प्रथमनिर्माणं सृष्ट्वा भचक्रं कमलोद्भवेनेति । लंकानगर्यामुदयाच्च भानोरिति च यदुक्तं तत्पौषमासे मृगमुखगते मकरादिस्थिते भास्वति भास्करे नासीत् तस्मात्कारणात्परिणयविधौ इंदुमासःचांद्रमासःश्रेयान् श्रेष्ठ उक्तः। अयं भावः । लंकायाक्षितिजगतयोर्मेषादिस्थितिचंद्रार्कयोः किल लोकत्रयस्य युगपत्प्रवृत्तिः । तत्र चंद्रार्कयोः समकलत्वाच्चांद्रमासादिः स एव मेषगतार्कत्वात्स एव चैत्रमासः तदानीमादित्यस्यैव होरा अतोर्कवारः इत्यादि सर्वं पौषे मकरादिस्थितेर्के न घटते यतः सौरवर्षमासादेः प्रवृत्तिः सहिताकारैर्मकरादेरेव स्वीकृता उक्तंच "मृगादिराशिद्वयभानुभोगात्" इति । अतश्चंद्र एव मुख्य इति ग्रंथकारोक्तिः नैतच्चतुरस्रम् । प्रवृत्तिकाले मेषादिगतार्कत्वात्सौरमासस्यापि प्रवृत्तेः सा फलकीर्तनायैव । वास्त-

वं तु मेषादेरेवग्रहगणिते प्रसिद्धा तथा चोक्तं 'दिनं सुराणामयनं यदुत्तरम्' इत्यादि । किंच प्रवृत्तिकाले चांद्रादिनं वर्षादेरपि प्रवृतेस्तस्यादिमुख्यत्वं कथन्न वक्तव्यं तस्मादनया युक्त्या चांद्रमासस्य श्रेष्ठत्वं वक्तुमनुचितं किंतु युक्त्यंतरसंहितागमबलात् । तदुच्यते।नक्षत्रेण युक्तः कालः।"सास्मिन्पौर्णमासीतिसंज्ञायाम्" इति च पाणिनेरनुशासनात्पौषीत्यादिसंज्ञा सौरादौ नोपपद्यते । तस्माच्चांद्रमास एव मुख्यः इति अत एवाह नारदोपि "यस्मिन्मासे पौर्णमासी येन धिष्ण्येन संयुता । तन्नक्षत्राह्वयो मासः पौर्णमासीतदाह्वया । तत्पक्षौ शुक्लकृष्णाख्यौ देवपित्र्यौच तावुभौ" इति अभिधानं च "पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ "इति । अत एव सिद्धांतेप्युक्तं । 'मासास्तथा च तिथयस्तुहिनांशमानात्' इति ।अतः सौरादौ मासप्रयोगो गौणवृत्त्या योजनीय इत्यस्माकं सिद्धांतः तर्हि "रवेरवैसारणमुत्तरायणमिति विवाहे सौरमासाः कथमुक्ताः न।षाढप्रभृतिचतुष्टये विवाह इत्यनेन चांद्रमासा ग्रंथांतरे उक्ताः ॥ १ ॥

नेष्टः पौषो मृगयुजि रवावादृतश्चेत्प्रवीणैश्चारुश्चैत्रोप्यजसहचरे भास्करे सुंदरीणां।।मांडव्याद्यैःस्मृतशुभफल-

स्यास्य किं नोपायमे मीनोऽपि स्या-
दविकृतफलः फाल्गुनस्य प्रसंगात् ॥२॥

अनयोर्विरोधे सति सयुक्तिकं निर्णयं वक्तुं पूर्वपक्षमाह । मंदाक्रांता । सुंदरीणामुपयामे विवाहे मृगयुजि मकरगते रवौ पौषो नेष्टः मकरगतार्कस्य शुभत्वेपि अशुभपौषयोगात्स नेष्ट इति भावः । ननु विपरीतं कुतो न स्यादित्यत्राह । आदृत इति प्रवीणैः पंडितंमन्यैः मृगयुजि रवौ पौषश्चेदादृतः स्वीकृतः मकरार्कस्य शुभत्वात् तदा चैत्रोऽपि । अजसहचरे मेषगते भास्करे सति चारुः शुभः स्यात् । नचैवमस्ति । किंच अस्य प्रसिद्धस्य फाल्गुनस्य फलमाह व्याधेः स्मृतशुभफलस्य प्रसंगाद्योगात् मीनो मीनगतार्कोऽपि अविकृतफलः किं न स्यात् । अपि तु अविकृतफल एव नविकृतं फलं यस्यासौ तथा यथावत्फल एवेत्यर्थः । शुभस्यापि फाल्गुनस्य योगात् दुष्टोपि मीनो दुष्टफल एवेति भावः । न चाप्येवमस्ति एवं सौरप्राधान्यं स्वीकर्तुरनिष्टद्वयम् ॥ २ ॥

झषोनिंद्योयदि फाल्गुनेस्यादजस्तु
वैशाखगतोनानिंद्यः मध्वाश्रितौद्वाव-
पिवर्जनीयावित्यादिवाचामियमेव-
युक्तिः ॥३॥

एवं सति सिद्धांतमाह । उपजातिका । यदि फाल्गुने झषो मीनगतार्कस्तदा न निंद्यः चांद्रस्य मुख्यत्वात् । एतत्प्रसंगेन व्रतबंधेपि निर्णयमाह । मेष इति मेषो मेषगतार्कस्तु यदि वैशाखगतस्तदा न निंद्यः मेषेर्के च व्रतं न हीत्युत्तरे शुभस्यापि मेषस्य शुभवैशाखयोगाच्छुभत्वामिति भावः । प्रकृतमाह मध्वाश्रितेति । मध्वाश्रितौ चैत्रमासगतौ द्वौ मीनमेषगतार्कावपि वर्जनीयौ चैत्रस्यदुष्टत्वात् मीनस्तु स्वरूपत एवाशुभः मेषस्तु चैत्रयोगादिति चांद्रस्य मुख्यत्वादिति सर्वत्र हेतुः इत्यादिवाचां इत्यादि वक्षिगां युक्तिरियमेव इत्यादिकमुक्तवतां युक्तिरियमुक्तैवेत्यर्थः ॥ ३ ॥



प्रायः सौरं मानमिष्टं विवाहे तत्किंचांद्रे मासमाहुः फलेन॥यस्मात्सम्यक्तत्फलाप्तिस्तदैक्ये सौरो मासः केवलः किंचिदूनः ॥ ४ ॥

यदि हि चांद्रे मुख्यत्वं तदा पृथक् सौरमानं कथमुक्तमित्याशंक्याह।शालिनी । यदि प्रायो बाहुल्येन सौरमानं विवाहे स्वीकृतं तत्तदा फलेन चांद्रमासं किमाहुः शौनकादयः । "धनमानपरिभ्रष्टा चैत्रे चात्र समैथुना । त्वसती " इत्यादिना यस्मादेतौ सौरचांद्र-

मासौ विवाहे उक्तौ तस्मात्तदैक्ये तयोः सौरचांद्रमासयोरेकत्वे सति फलाप्तिः सम्यक् परिपूर्णा स्यात् । केवलः सौरमासः चांद्रापेक्षया किंचिदूनः चांद्रस्य मुख्यत्वादित्यर्थः ॥ ४ ॥

योषितांगुरुपतंगगोचरे शोभने शुभकरः करग्रहः ॥ अष्टवर्गविधिना तदत्यये सूर्यशुद्धिमपरे नृणां जगुः ॥ ५॥

एवं सौरचांद्रयोर्बलाबलमुक्त्वा गोचराष्टकवर्गयोर्बलाबलमाह । रथोद्धतानि ।योषितां स्त्रीणां गुरुपतंगयोः गुरुसूर्ययोर्गोचरे शोभने सति गोचरविधिना गुरुबले रविबले च सतीत्यर्थः । करग्रहः शुभकरः स्यात् । तदत्यये तस्य गोचरबलस्यात्यये अलाभे सति अष्टवर्गविधिना गुरुपतंगबले सति मतांतरमाह । सूर्यशुद्धिमिति ।अपरे नृणां पुरुषाणां सूर्यशुद्धिं जगुः नतु गुरुशुद्धि गोचरविधिना तदलाभे अष्टवर्गविधिनेति उक्तंच प्राक् भानुरप्युपचयेति पुरुषाणां गुरुशुद्धिस्तु व्रतबंधएव अतो न विवाहे शूद्रादीनां तु व्रतबंधाभावाद्विवाह एव गुरुशुद्धिः सूर्यशुद्धि श्चेति ॥ ५ ॥

अष्टवर्गफलमेव जातके नास्य किं परिणयेपि मुख्यता ॥ सत्यमुद्वहन-

जन्मशास्त्रयोरन्यता मुनिभिरेव स-
स्मरे ॥ ६ ॥

नन्वत्र गोचरस्य कथं मुख्यत्वं तत्राह । जातके अष्टकवर्गफलमेवास्ति तत्र यच्चंद्रराशिफलं तदेव गोचरफलं संहितासु पठितं अतोस्य अष्टवर्गफलस्य परिणयेति मुख्यता किं न स्यात् गोचरफलं ह्येकस्माच्चंद्रराशेरेव । अष्टवर्गफलंत्वष्टराशिभ्यः अतोस्याधिक्यात् परिणयेपि तत्प्राधान्यं कथं नस्यादिति। भावः एतदर्धांगीकारेण परिहरति । सत्य मिति जातके अष्टवर्गफलं मुख्यमिति मन्यामहे परिणयेपि मुख्यतेति न सहामह इति कथं उद्वहनजन्मशास्त्रयोः विवाहशास्त्रजन्मशास्त्रयोरन्यता अन्यत्वं मुनिभिरेव संस्मरे स्मृता । विवाहशास्त्रस्य जन्मशास्त्रस्य च भेदो मुनिभिरेव स्मृत इति॥ ६ ॥

क्रूरमष्टममरिष्टमिष्टदं सप्तमं शुभमु-
शंति जन्मनि ॥ नेयमुद्वहनरीतिरि-
त्यसावत्रगोचरपथो रथोद्धतः ॥ ७ ॥

अत्रोदाहरणमाह । जन्मनि जन्मकाले अष्टमं क्रूरमरिष्टमशुभमुशंति सप्तमं शुभग्रहं इष्टदं शुभप्रदमुशंति कांक्षंति मुनयःइयमुद्वहनरीतिर्विवाहमार्गे नभवति।

तथाहि जन्मकालेऽष्टमः क्रूरग्रहोऽशुभः विवाहे तु शुभः जन्मकाले सप्तमः शुभग्रहः शुभः विवाहेत्वशुभः अतोऽनयोः शास्त्रयोरन्यथात्वं इति हेतोरत्र विवाहेऽसौ गोचरपथो गोचरमार्गः रथोद्धतः रथैरुद्धतः अतिघृष्टः अस्य मार्गे श्लेषः गोचरमार्गः पारंपर्यागतः स्फुट इत्यर्थः रथोद्धत इति छंदसोपि नाम सूचितम् ॥ ७ ॥

इति विवाहवृंदावने मासगोचरविचाराध्यायो दशमः ॥ १० ॥

इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशदैवज्ञविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां मासगोचरविचाराध्यायो दशमः १०

अथ ग्रहयोगाध्यायः ॥ चक्रस्यार्धे प्राचि पश्चात्क्रमेण क्रूरात्क्रूरैश्चक्रमित्यामनंति ॥ अत्रोढायाः सुभ्रुवः स्वैरिणीत्वे भ्राम्यत्युच्चैश्चक्रवच्चित्तवृत्तिः ॥ १ ॥

अथ प्रातिस्विकं भावफलमुक्त्वा योगजमाह । शालिनी । चक्रस्य प्राचि अर्द्धे पश्चादर्द्धे क्रमेण क्रूराक्रूरैः कृत्वा चक्रमितियोगमामनंति मुनयः एतदुक्तं

भवति दशमभावभागानारभ्य चतुर्थभावभागपर्यंतं चक्रस्य पूर्वार्द्धं चतुर्थभावभागानारभ्य दशमभावभागपर्यंतं पश्चिमार्द्धं तत्र चक्रस्य पूर्वार्द्धे यदाक्रूरा ग्रहाः पश्चिमार्द्धे सौम्यास्तदा चक्रं नाम योगःस्यादिति।अस्य फलमाह। अत्रेति। अत्र योगे ऊढायाः परिणीतायाः सुभ्रुवःसुष्टु भ्रुवौ यस्याःसा सुभ्रूः तस्या योषिताश्चित्तवृत्तिः मनोवृत्तिः स्वैरिणीत्वे पौंश्चल्यविषये चक्रवदुच्चैर्भ्राम्यति "चतुर्थे स्वैरिणी प्रोक्ता पंचमे बंधकीस्मृत"-इति स्मृतिः । चतुर्थे चतुर्थपुरुषोपभोगे पौंश्चल्यविषये तस्या मनोवृत्तिरतितरां चक्रवद्भ्रमतीत्यर्थः अयं सर्वग्रहकृतोयोगः ॥ १ ॥

तनुनिमीलनगैश्चशुभाशुभैर्ध्वज इतीह कृतोद्वहना वधूः ॥ सगुणलाभवती भवतींगितैः प्रियमनोयमनोन्मुखविभ्रमा ॥ २ ॥

द्रुतविलंबितानि । तनुर्लग्नं निमीलनमष्टमं तत्र गतैः क्रमेण शुभाशुभैः लग्नस्थैः शुभैरष्टमस्थैः पापग्रहैरित्यर्थः अयं ध्वज इति योगः इहास्मिन्योगे कृतोद्वहना वधूः सगुणलाभवती भवति कृतमुद्वहनं यस्याः सा तथा गुणैः सहवर्तमानः सगुणः सचासौ लाभश्च सोस्यास्तीति सगुणलाभवती पुनः कथं-

भूता इंगितैः स्वचेष्टितैः हावभावादिभिः प्रियमनो-यमनोन्मुखविभ्रमा प्रियस्य भर्तुर्मनः प्रियमनः तस्य यमनमाकर्षणं तत्रोन्मुखः विभ्रमो विलासो यस्या. सा तथा "विभ्रमो भ्रांतिहावयो" इति विश्वः॥२॥

अखिलकेंद्रसखैः खलखेचरैर्भवति
वापिरिहार्पितपुंस्करा ॥ युवतिरु-
ज्झितकांतगृहा गृहे जनयितुः कुरुते
कुरुतोत्सवान् ॥ ३ ॥

अखिलानि च तानि केंद्राणि च तेषां सखायस्ते तथा टच् । चतुर्ष्वपि केंद्रेषु गतैः खलखेचरैः पापग्रहैः वापिर्नाम योगो भवति । इहास्मिन्योगे अर्पितपुंस्करा अर्पितो दत्तः पुंसे वराय करो यया सा परिणीतेत्यर्थः युवतिः स्त्री उज्झितकांतगृहा सती उज्झितं त्यक्तं कांतगृहं भर्तृगृहं यया सा तथा जनयितुः पितुर्गृहे कुरुतोत्सवान्कुरुते कुत्सितानि रुतानि कुरुतानि कुशब्दाः तेषामुत्सवा आनंदाः ॥ ३ ॥

गगनतोयतपस्सु शुभैर्भृगुर्गदतिशं-
खमशं स्खलयत्यसौ॥धनयशोनय-
शोभितनुश्रियां परिणयेन पयोरुह-
चक्षुषाम् ॥ ४ ॥

गगनं दशमं तोयं चतुर्थं तपो नवमं तेषु यथातथं स्थितैः शुभग्रहैः शंखसंज्ञं योगं भृगुमुनिर्गदति । असौ योगः अशमसुखं स्खलयाति प्रतिबध्नाति निराकरोतीत्यर्थः । केन परिणयेन कासां पयोरुहचक्षुषां पयोरुहं कमलं तद्वच्चक्षुर्यासां तास्तथा तासां स्त्रीणां कथंभूतानां धनयशोनयशोभितनुश्रियां धनं च यशश्च नयश्च तैः शोभते सा धनयशोनयशोभिनी तनोर्वपुषः श्री कांतिः तनुश्रीधनादिशोभिनी तनुः श्रीर्यासां तास्तथा ॥ ४ ॥

एकादशे कुजरवीरविजःसपत्ने वित्ते
विधुस्तपसि शेषनभश्चराश्चेत् ॥
श्रीवत्स एष सुखयत्यपि रूपरिक्तां
सौभाग्यभोगभरभृंगितरंगितांगीम् ५॥

वसंततिलका । एकादशे कुजरवी सपत्ने शत्रौ षष्ठे रविजः शनिः वित्ते धने विधुः तपसि नवमे शेषनभश्चराः कुजरविशनिचंद्रव्यतिरिक्ताश्चेत्स्युः तदा श्रीवत्सो नाम योगः एष योगः रूपेण रिक्ता रूपरिक्ता सौंदर्यहीना तामपि स्त्रियं सुखयति । कथंभूता । सौभाग्येति । सौभाग्यस्य भोगः तस्य भरो भारः तस्य भंगी रचना तया तरंगितानि तरंगाः जाताः येषु तानि तरंगितानि तानि अंगानि यस्याः सा तथा ॥ ५ ॥

सौम्या मूर्तौ स्वांतराश्योरसौम्याः कुर्युर्योगं कार्मुकं कन्यकास्मिन्॥ हत्वा कांतं कांतवेषा विषाद्यैर्वेश्यारामं रंरमीति स्वरत्या ॥ ६ ॥

शालिनी । मूर्तौ लग्ने सौम्याः स्वांत्यराश्योर्द्वितीयद्वादशयोर्यथा तथा असौम्याः पापाः कार्मुकं नाम योगं कुर्युः । अस्मिन्योगे परिणीता कन्यका कांतवेषा सती वेश्यारामं रंरमीति अतिशयेन रमत इति रंरमीति।यङो लुक्।वेश्याः रमयतीति वेश्यारामः वेश्योपभोगी तमप्येषा अतिशयेन रमयतीति कया स्वरत्या निजोपभोगकौशलेन किं कृत्वा विषाद्यैः विषशस्त्राद्बंधनादिभिः कांतं भर्तारं कृत्वा ॥ ६ ॥

सूनौ शुक्रः सांगिरा गौररश्मिर्दुश्चिक्येस्यादंगनाभ्युद्गमश्चेत् ॥ आनंदोयं सुंदरीसांद्रसौख्या तेनानंदं वंशयोर्विस्तृणाति ॥ ७॥

सूनौ पंचमे शुक्रः दुश्चिक्ये तृतीये सांगिराः सगुरुः गौररश्मिश्चंद्रस्तदांगनाभ्युद्गमश्चेत्स्यादंगनाया अभ्युद्गमोभ्युदयः विवाह इति यावत् । यद्वा अंगनाभ्युद्गमः कन्यालग्नं तदायं आनंदो नाम योगस्तेन यो-

गेन सुंदरी सांद्रसौख्या सांद्रं निबिडं सौख्यं यस्याः सा तथा वंशयोः पितृभर्तृवंशयोरानंदं विस्तृणाति विस्तारयतिणिजंतभावः ॥ ७ ॥

व्ययरिपुहिबुकेषु वक्रशुक्रद्युमणि-
सुतैः क्रमशः कुठार एषः॥इह विहर-
ति संहतस्ववंशा विटपतले पटलेखि-
ताभिसारा ॥ ८ ॥

पुष्पिताग्राणि । व्ययो द्वादशं रिपुः षष्ठं हिबुकं चतुर्थं एषु वक्रो भौमः शुक्रः प्रसिद्धः द्युमणिसुतः शनिः एभिः क्रमशः स्थितैः एषः कुठारो नाम योगः स्यात् । इहास्मिन्कुठारे योगे परिणीता विटपतले भंडसमूहे विहरति क्रीडते । कथंभूता संहृतो मारितः स्ववंशो यया सा तथा पटे वस्त्रांचले लेखितः अभिसारो यस्याः सा तथा असंशयमभिसारिणीत्यर्थः।नरं भोगार्थिनी याति " संकेतं साभिसारिकेति " अभिधानात् । यद्वा । अभिचारेति पाठः । अभिचारो व्यभिचारो तत्पाठे व्यभिचारिणीत्यर्थः ॥ ८ ॥

रविकविरविजेंदुभिः क्रमेण व्ययध-
न षण्निधनेषु कूर्म एषः॥इहविहितक-
रग्रहा गृहाणि भ्रमति भुजिष्यतया
परः शतानि ॥ ९ ॥

रविः सूर्यः कविः शुक्रः रविजः शनिरिंदुश्चंद्रः एभिर्ग्रहैर्व्ययो द्वादशं धनं द्वितीयं षट् षष्ठं निधनमष्टमं एषु यथाक्रमं स्थितैः एषः कूर्मो नाम योगः। इहास्मिन्योगे विहितः कृतः करग्रहो यस्याः सा तथा परःशतानि गृहाणि भ्रमति। शतेभ्यः पराणि परःशतानि पारस्करादित्वात्सुट्। यद्वा। परः शब्दो निपात इति भोजराजः शतेभ्योऽधिकानीत्यर्थः। कया हेतुभूतया भुजिष्यतया दोषत्वेन भुजिष्याया भावो भुजिष्यता 'त्वतलोर्गुणवचनस्य' इति 'पुंवद्भावः' 'नियोज्यकिंकरप्रेष्यभुजिष्यपरिचारके' इत्यमरः॥ ९॥

भवपरिभवविक्रमैः क्रमेण द्युमणि-
महीसुतसौरिभिः सनाथैः॥ परि-
णमतिदलेंदुरिंदुमुख्याः कुलयुग-
लोद्धृतिधुर्यतां विधास्यन्॥ १०॥

भवः एकादशं परिभवः षष्ठं विक्रमस्तृतीयं एभिः स्थानैः द्युमणिः सूर्यः महीसुतो भौमः सूर्यस्यापत्यं सौरिः शनिः तैर्यथाक्रमं सनाथैर्युक्तैः कृत्वा दलेंदुरर्धचंद्रो नाम योगः परिणमति परिपाकं प्राप्नोति किं करिष्यन् इंदुमुख्याश्चंद्रवदनायाः स्त्रियः कुलयुगलोद्धृतिधुर्यतां विधास्यन् करिष्यन् कुलयुगलं पितृकुलं

भर्तृकुलं चेति तस्योद्धृतिरुद्धरणं धुरं वहतीत्यर्थः। औपच्छंदसिकम् ॥ १० ॥

व्ययनिधनतनूषु मंदचंद्रारुणकिरणैर्मुसलं जगुर्मुनींद्राः॥ इह वृष्णिकुलांतके कुमारी कुलमारी नच कापि कार्यसिद्धिः ॥ ११ ॥

व्ययो द्वादशं निधनमष्टमं तनूर्लग्नं 'स्त्रियां मूर्तिस्तनुस्तनूः'इत्यमरः। तेषु यथाक्रमं मंदः शनिः चंद्रः प्रसिद्धः अरुणकिरणः सूर्यः तैः स्थितैः कृत्वा मुसलं नाम योगं मुनींद्रा जगुः। इहास्मिन्वृष्णिकुलांतके योगे वृष्णयो यादवाः तेषां कुलं तस्यांतकं संहारकं मुसलमित्यर्थः। क्रीडद्भिर्यादवैः सांबजठरे यद्वेष्टितं मुसलं तेन मुसलेन यादवा विनष्टा इति भागवतादौ प्रसिद्धेः। अस्मिन्मुसले योगे कुमारी कुलमारी कुलनाशिनी भवतिनचकापि कार्यसिद्धिर्भवति केवलकुलनाशिन्येवेत्यर्थः ॥ ११ ॥

तनुनवभवगैः क्रमेण योगो बुधविबुधार्चितपंगुभिर्गजःस्यात् ॥ इह युवतिरहंकृता कृतार्थान् वितरति दैवतदैवतत्परा वा ॥ १२ ॥

पुष्पिताग्रं। तनुर्लग्नं नव नवमं भव एकादशं तेषु गतैः यथाक्रमं बुधः प्रसिद्धः विबुधार्चितो गुरुः पंगुःशनिः एभिः कृत्वा गजो नाम योगः स्यात् । इहास्मिन्योगे युवतिः स्त्री अहंकृताऽहंकारं प्राप्ता सती कृता निष्पादिताश्च ते अर्थाश्च तान्वितराति ददातिवा इत्यथवा युवतिः दैवतदैवतत्परा स्यात् दैवतानि च दैवं च दैवतदैवानि तेषु तत्परा देवार्चनरता भाग्यरता चेत्यर्थः। भाग्यवतीति यावत् ॥ १२ ॥

इति विवाहवृंदावने ग्रहयोगाध्याय एकादशः ॥ ११ ॥

इति श्रीसकलागमाचार्यवर्यश्रीकेशवदैवज्ञसुतगणेशविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां ग्रहयोगाध्यायो एकादशः ॥ ११ ॥

## अथ ग्रहाणां भावकुंडलिकाध्यायः॥

चिरंजीवान् जीवः कविरविरलानंगसुभगां शंशाकोर्वीपुत्रौ यमयुवतिपार्श्वप्रणयिनीम्॥बुधो भतुर्भक्तांमृगदृशमशीलां शनिरपि त्रयीमूर्तिर्मूर्तौ सृजति शिखिशस्त्रादिनिधनम् ॥ १ ॥

पूर्वमरिपराक्रमेत्यादिना साधारण्येन ग्रहफलान्यु-

क्तानि अधुना प्रतिस्थानं तानि सविशेषाण्याह।तत्रादौ लग्नस्थग्रहाणां फलानि शिखरिणी।मूर्तौ लग्ने स्थितो जीवः मृगदृशं स्त्रियं चिरंजीवां सृजति चिरंजीवतीति चिरंजीवा चिरमित्यव्ययं।विभक्तिप्रतिरूपकं।कविः शुक्रः अविरलानंगसुभगां सृजति अविरलो निबिडश्चासौ अनंगश्च अनंगो मदनः तेन सुभगा सौभाग्यवती शशांकश्चंद्रः उर्वीपुत्रो भौमस्तौ यमयुवतिपार्श्वप्रणयिनीं सृजतः यमस्य युवतिः तस्याः पार्श्वं सामीप्यं तत्र प्रणयः प्रीतिरस्ति अस्याः सा तथा तां यमलोककांक्षिणीमित्यर्थः। बुधो भर्तुः भक्तां सृजति शनिरपि अशीलां दुष्टशीलां त्रयीमूर्तिः सूर्यः शिखिः अग्निः शस्त्रं प्रसिद्धं ते आदिर्येषां तानि शिखिशस्त्रादीनि तेभ्योनिधनं यस्याः सा तथा तं ॥ १ ॥

नितांतधननीं धने सितसितांशुजी-
वेंदुजा रुजादहनदस्युभिर्विधुरितां
धरानंदनः ॥ सुतेष्वपि मितंपचां म-
लिनमूर्तिमर्कात्मजः स्त्रियं सहजदु-
र्भगां जनयति द्युतीनां पतिः ॥ २ ॥

अथ धनभावस्य पृथ्वीवृत्तं। धनेद्वितीयभावे स्थिताः सितसितांशुजीवेंदुजाःनितांतं धनिनीं जनयंति । सितः शुक्रः सितांशुश्चंद्रः ॥ जीवो गुरुः इंदुजो बुधः नितां-

तं धनं तदस्त्यस्याः सा तथा धरानंदनो भौमः रुजा-दहनदस्युभिर्विधुरतां जनयति रुजा रोगः 'आपं चैव हलंतानाम्' इतिटाप् । दहनोऽग्निर्दस्यवश्चोराः सर्पादयो वा विधुरा वियुक्ता भर्तृहीना तस्या भावो विधुरता-वैधव्यं पुंस्त्वं पूर्ववत् अर्कात्मजः शनिः सुतेषु पुत्रेष्व-पि विषये मितंपचां मलिनमूर्तिंजनयति मितंपचतीति मितंपचा कृपणा " मितनखेच" इतिखशूखित्त्वान्मु-म् । मलिना मूर्तिर्यस्याः सा तथा द्युतीनां पतिः सूर्यः सहजदुर्भगां जनयति सह जातं सहजं स्वाभाविकं तनु-दुर्भगमदैवं यस्याः सा तथा यद्वा सहजे सोदरविषये दुर्भगो यस्याः सा तथा ॥ २ ॥

इनशनीसहजे सधनां वधूं तनुधनीं-
सचिवःसुभगांशशी॥सुकृतिनींकुरुतः
कुजसोमजौ नयति देवरि देवरिपू-
पनीः ॥ ३ ॥

अथ तृतीयस्य द्रुतविलंबितम् सहजे तृतीयभावे इनशनीरविशनी वधूं सधनां धनसहितां कुरुतः सचिवः शक्रसचिवो बृहस्पतिः तनुधनां करोति तनु कृशं धनं यस्याः सा तथा शशी चंद्रः सुभगां सुष्ठु भगो भाग्यं यस्याः सा तथा कुजसोमजौ भौमबुधौ सुकृति-नीं कुरुतः सुकृतं पुण्यं तदस्त्यस्याः सा तथा देवरिपू-

पनीः शुक्रः देवरि देवरे नयति प्रापयति देवरगामिनीत्यर्थः । देवानां रिपवो दैत्याः तानुपनयतेसौ देवरिपूपनीः दैत्यगुरुः । देवृ इति ऋकारांतः "समौ तु देवृदेवरौ" इत्यभिधानात् ॥ ३ ॥

दारिद्र्यं रविरवनीसुतो वरांगव्याघा-
तं गुरुभृगुजेंदुजाः प्रभुत्वं॥बाल्येब्जः
प्रियवियुतिशनिस्तनांभःशून्यत्वंसृ
जति सुखेसुवासिनीनाम् ॥ ४ ॥

अथ चतुर्थस्य प्रहर्षिणी ।सुखे चतुर्थभावे रविःदारिद्र्यं सृजति अवनीसुतो भौमः वरांगव्याघातं वरांगं भगं तस्य व्याघातो भंगः गुरुभृगुजेंदुजाः प्रभुत्वं सृजंति गुरुर्बृहस्पतिः भृगुजः शुक्रः इंदुजो बुधः प्रभुत्वं स्वामित्वम् अब्जश्चंद्रमाः बाल्ये बालत्वे प्रियवियुतिं भर्तृवियोगं शनिः स्तनांभःशून्यत्वं स्तनयोरंभः स्तनांभः स्तन्यदुग्धं तस्य शून्यत्वं अभावं सृजति कासां सुवासिनीनां प्रौढांगनानां 'चिरंटी तु सुवासिनी'इत्यमरः ॥ ४ ॥

सत्पुत्रामसुरसुरेज्यसोमपुत्राः पुत्रा-
रिंरविरसुतप्रजाद्विजेंद्रः ॥ शोकार्ता-
मवनिसुतः सुतस्थएनिः संतानं
सततरुजं सृजेत्कुमारी ॥ ५ ॥

अथ पंचमस्य प्रहर्षिणी। असुराश्चसु राश्च असुरसु-
राः तेषामिज्यौ शुक्रगुरू सोमपुत्रो बुधःएतेषु तत्स्थाः
पंचमभावस्थिताः कुमारीं सत्पुत्रां सृजेयुः कुर्युः रविः
पुत्रारिं सृजेत् पुत्राणामरिः पुत्रघातिनी द्विजेंद्रश्चंद्रः
असुतप्रजां सुतेभ्योन्या असुता सा प्रजा यस्याः सा
तथा कन्याप्रसूः अवनिसुतो भौमः शोकार्तां शोकेन
आर्तांपीडिताम् ऐनिः इनस्यापत्य मैनिः संताने संत-
तिविषये सततं नित्यं रुक् रोगो यस्याः सा तथा तां
सृजेत् ॥ ५ ॥

विधुर्निधनमिंदुजः परभयं जयं भा-
नुमान्कुजः कुशलकर्मभूर्विगतवैरतां
वैरिगः॥ रिपुत्वमुशनासहं सहचरेण
चारुभ्रुवां व्यनक्ति वचसां पतिः प-
तिमजातशत्रुश्रुतिम् ॥ ६ ॥

अथ षष्ठे पृथ्वीवृत्तम्।वैरिगः षष्ठभावगः विधुः चारु-
भ्रुवां चारवो भ्रुवो यासां ताः तासां स्त्रीणां निधने व्यन-
क्ति प्रकटयाति ददातीत्यर्थः । इंदुजो बुधः परभयं
शत्रुभयं भानुमान् भानवो रश्मयः संत्यस्यासौ तथा
सूर्यः जयं कुजो भौमः कुशलं क्षेम अर्काद्भवतीत्यर्कभूः
शनिर्विगतवैरतां विगतं वैरं यस्याःसा विगतवैरा तस्या
भावो विगतवैरता प्राग्वत्पुंस्त्वं उशना शुक्रः सहचरे-

ण भर्त्रा समं सार्द्धं रिपुत्वं शत्रुत्वं सहचरतीति सहचराः वचसां पतिर्बृहस्पतिः भर्त्तारमजातशत्रुश्रुतिंन्यनक्ति शत्रूणां श्रुतिःश्रवणमजाता शत्रुश्रुतिर्यस्यासौ तथा शत्रुरिति श्रवणमपि नास्तीत्यर्थः ॥ ६ ॥

बुधोवंध्यामिंदुः परिचितसपत्नीपरिभवां गलद्गर्भां पंगुः परनररतां दानवगुरुः ॥ अवीरामस्तेर्कों गुरुरपरसेवाव्यसनिनीं विवाहे माहेयः स्त्रियमतिरजस्कां जनयति ॥ ७ ॥

अथ सप्तमे शिखरिणी । विवाहे विवाहकाले अस्ते सप्तमभावे स्थितो बुधः स्त्रियं वंध्यां जनयाति इंदुश्चंद्रः परिचितसपत्नीपरिभवां सपत्न्याः संबंधी परिभवः पराभवः सपत्नीपरिभवः परिचितः परिवृद्धः सपत्नीपरिभवो यस्याः सा तथा पंगुः शनिः गलद्गर्भां गलंतश्च्यवंतः गर्भा यस्याः सा तथा दानवगुरुः शुक्रः परनररतां परपुरुषगामिनी अर्कः सूर्यः अवीरां नास्ति वीरो भर्ता यस्याः सा तथा गुरुः अमरसेवाव्यसनिनीम् अमरसेवायां व्यसनं विद्यते यस्याः सा तथा माहेयो भौमः अतिरजस्कां जनयति अतिशयितं रजो यस्याः सा तथा प्रदरव्याधियुक्तामित्यर्थः ॥ ७ ॥

सितसितकिरणेज्यामृत्यवे मृत्युवे-
श्मन्यनवरतसुखायुःसंपदे सूर्यसौ-
री ॥ भवति पतिशरीरद्रोहकृद्रौहि-
णेयो द्रुहिणगृहमुखीनां यक्ष्मणे क्षो-
णिजन्मा ॥ ८ ॥

अथाष्टमे मालिनी । मृत्युवेश्मनि अष्टमभावे सितासितकिरणेज्याद्रुहिणगृहमुखीनां स्त्रीणां मरणाय भवंति । सितः शुक्रः सितकिरणश्चंद्रः ईज्यो गुरुः द्रुहिणो ब्रह्मा तस्य गृहं पद्मं तद्वन्मुखं यासां तास्तथा सूर्यसौरी रविशनी अनवरतसुखायुःसंपदे भवतः सुखं चआयुश्च संपच्च सुखायुःसंपत् द्वंद्वैकत्वं क्लीबत्वं च अनवरतमखंडितं च तत्सुखायुःसंपत्तस्मै रोहिण्याअपत्यं रौहिणेयो बुधः पतिशरीरद्रोहकृत् स्यात् पत्युःशरीरं तस्य द्रोहः अपघातः तं करोतीति तथा क्षोणिजन्मा भौमः यक्ष्मणे व्याधये भवेत् ॥ ८ ॥

शशिसुतगुरुशुक्राः सांद्रसौभाग्यलीलां सरलहसितकांतस्वांतकेलिं कु-
मारी ॥ रविरविसुतवक्राः कैतवाक्रां-

तशीलां तपसि तुहिनरश्मिः स्त्रीसवित्रीं करोति ॥ ९ ॥

अथ नवमे मालिनी । तपसि नवमभावे शशिसुतगुरुशुक्राः कुमारीं सांद्रसौभाग्यलीलां सरलहसितां कांतस्वांतकेलिं कुर्वंति॥ शशिसुतो बुधः गुरुशुक्रौ प्रसिद्धौ सांद्रं निबिडं च तत्सौभाग्यं च तस्य लीला यस्याः सा तथा सरलम् ऋजु तच्च तद्धसितं च तथा कांतस्य भर्तुः स्वांतं मनःकांतस्वांतं सरलहसितेन कातस्वांते केलिः क्रीडा यस्याः संबंधेन सा तथा रविरविसुतवक्राः कैतवाक्रांतशीलां कुर्वंति। रविः सूर्यःरविसुतः शनिः वक्रो भौमः कैतवं कपटं तेन आक्रांतं युक्तं शीलं यस्याः सा तथा तुहिनरश्मिश्चंद्रः स्त्रीसवित्रीं करोति सूते सा सवित्री स्त्रीणां सवित्री कन्याप्रसूः ॥ ९ ॥

शनिरनियमशौचां कन्यकामन्यकार्ये विधुरतिविधुरांगीं शाकिनीं व्योम्नि वक्रः ॥ रचयति रविरुग्रां कोविदः कार्मणज्ञामविकृतसुकृतश्री मालिनीमार्यशुक्रौ ॥ १० ॥

अथ दशमे मालिनी । व्योम्नि दशमभावे शनिः

कन्यकामनियमशौचां रचयति करोति नियमेन र-
हितं शौचं यस्याः सा तथा शुचित्वहीनामित्यर्थः ।
विधुश्चंद्रः अन्यकार्यैः परकर्मभिः अतिविधुरांगीं रच-
यति अतिशयितं विधुराणि विकलानि अंगानि य-
स्याः सा तथा वक्रो भौमः शाकिनीडाकिनीक्षुद्रदेव-
ताविशेषः शाकिनीव शाकिनी मांसभक्षिके-
त्यर्थः । रविः सूर्य उग्रामशीलां कोविदो बुधः कार्म-
णज्ञां कार्मणं क्षुद्रकर्मविशेषः तज्जानातीति तथा।आ-
र्यशुक्रौ गुरुशुक्रौ अविकृतसुकृतश्रीमालिनीं
रचयतः सुकृतं च श्रीश्च सुकृतश्रियौ पुण्यलक्ष्म्यौ
अविकृते पूर्णे च ते सुकृतश्रियौ च ताभ्यां माल-
ते शोभते सा तथा अत्र मालिनीति छंदसोपि नाम
सूचितम् ॥ १० ॥

एकादशे दशशतांशुमुखाः सुखानि
रत्नांबरद्रविणभागभरोन्मुखानि ॥
पाणिग्रहे ददति दीर्घदृशां ग्रहेंद्राःस-
र्वेऽपिसर्वभवनेष्वबला न किंचित् ॥११॥

वसंततिलका।दीर्घादृग्लोचनं यासां तास्तासां स्त्रीणां
पाणिग्रहे एकादशे स्थाने दशशतांशुमुखाः दश श-
तानि अंशवः किरणा यस्यासौ तथा सन्मुखमादियें-

षां ते सूर्यादयो ग्रहेंद्राः रत्नांबरद्रविणभोगभरोन्मुखा-
निं सुखानि ददाति रत्नानि च अंबराणि च द्रविणं च ते
षां भोगः तस्य भरो भारः तस्मादुन्मुखानि उदिता-
नि अथ श्लोकावशेषे सति अत्रैव ग्रहाणां भावफलेषु
बलप्राशस्त्यमाह । सर्वेपीति । सर्वेपि ग्रहा अबलाः
स्थानादिबलहीनाः संतः सर्वभवनेषु लग्नादिसर्वभावे-
ष्वपि किंचिच्छुभं नदद्युः अर्थादेतत्फलमुक्तं तत्स-
बलानामेवेति ॥ ११ ॥

व्यये शुभाः सद्व्ययकर्षितां शनिः सु-
रारुचिं रचयति दुर्विधां विधुश्च ॥
अदक्षिणावयवरुजं कुजो रविर्विरूप-
यत्यतिरुचिरामपि स्त्रियम् ॥ १२ ॥

अथ व्यये रुचिरावृत्तम् व्यये द्वादशे स्थिताः शु-
भाः बुधगुरुशुक्राः स्त्रियं सद्व्ययकर्षितां रचयंति।कुर्व-
ति संश्चासौ व्ययश्च तेन कर्षिता कृशत्वं प्राप्ता तां श-
निः सुरारुचिं सुरायां रुचिर्यस्याः सा तथा विधुश्चं-
द्रः दुर्विधां विधानं विधा दुर्विधां दुष्टकर्माणं कुजो भौ-
मः अदक्षिणावयवरुजमदक्षिणश्चासाववयवश्च तस्य
रुग्रोगो यस्याः सा तथा वामांगव्याधितां रविरतिरुचि-
रामातिसुंदरामपि स्त्रियं विरूपयति विरूपांकरोति रु-
चिरेतिच्छंदसोपि नाम ॥ १२ ॥

इति मुनिजनमतमतनुवितर्कं प्रति गृहचरखचरोद्यदुदर्कम् ॥ परिविगणय्य विशेषमशेषफलमिदमशेषमनुज्झितरेखम् ॥ १३ ॥

अथैषां भावफलादीनां प्राशस्त्यमाह। इत्यनंतरोक्तमिदं लग्नादिभावस्थितग्रहाणां फलमशेषं समस्तमनुज्झितरेखं भवेत्। न उज्झिता अनुज्झिता रेखा येन तत्तथा। अत्यक्तमर्यादं यथावद्भवतीत्यर्थः। कथंभूतं मुनिजनमतं मुनिजनानां संमतम् अतनुः पृथुः वितर्को यस्य तत्तथा यद्यप्युत्तानार्थमेव दृश्यते तथा ग्रहबलादिविचारवशाद्बहुवितर्कमित्यर्थः। पुनः कथंभूतं प्रतिगृहेति गृहं गृहं प्रति प्रतिगृहं प्रतिगृहं चरंति ते प्रतिगृहचराः ते च ते खचराश्च तेभ्य उदेति उद्भवतीति प्रतिगृहचरखचरोद्यन् स उदर्कः उत्तरकालीनं शुभाशुभं फलं यस्मिन् तत्तथा किं कृत्वा अशेषं परिविगणय्य प्रागुक्तं समस्तं विशेषं बलाबलरूपं विचार्यैत्यर्थः ॥ १३ ॥

इति विवाहवृंदावने ग्रहाणां भावकुंडलिकाध्यायो द्वादशः ॥ १२ ॥

इति श्रीसकलागमाचार्यश्रीकेशवसांवत्सरात्मजग-

णेशविरचितायांविवाहवृंदावनटीकायां विवाहदीपिका यां ग्रहाणां भावकुंडलिकाध्यायो द्वादशः ॥ १२ ॥

## अथ ग्रहयोगादिबलाबलाध्यायः ॥

षट्त्र्यायेष्वशुभाः शुभायनिधनं द्यूनांत्यवर्जं परे त्र्यायार्थेषु शशी मृतौ शनिरवी भंगाय तत्रापरे ॥ क्रूरद्यूनवृतान्विते शशितनू अस्ते सितज्ञौ विधुर्लग्ने सोमसिताधिपाद्विषिसितः सेंदुर्विनष्टांशपः ॥ १ ॥



अथोक्तभावफलानां व्यवहारार्थमुपसंहारादिकं तथान्यदपि शुभाशुभयोगादिकं बलादिकं च निरूपयन् ग्रहबलाध्यायमारभते। तत्रादौ भावफलोपसंहारादिशार्दूलविक्रीडितं।षट्षष्ठं त्रयस्तृतीयमाय एकादशमेष्वशुभाः पापग्रहाः शुभाय भवन्ति शेषेष्वशुभाय निधनमष्टमं द्यूनं सप्तममंत्यं द्वादशमेतानि वर्जयित्वान्येषु नवसु स्थानेषु परे सौम्यग्रहा बुधगुरुशुक्राः शुभाय भवंति । शेषेषु निधनद्यूनांत्येषु अशुभाय शशी चंद्रः त्र्यायार्थेषु तृतीयैकादशद्वितीयेषु शुभाय भवेत् । शेषेष्वशुभाय तत्राष्टमे सर्वेषां विशेषमाह। मृतावीति मृतौ अष्टमे शनिरवी शुभाय

भवतः नत्वशुभाय अत्ररवेरुपलक्षणाद्राहुरप्यष्टमे शुभः तत्स्वरूपांतरंकेतुश्चराहुफलस्यरवेरतिदेशोक्तेः तत्राष्टमे स्थाने परेन्ये चंद्रभौमबुधगुरुशुक्रा भंगाय भवंति लग्नभंगकर्तारइत्यर्थः। अन्यानपिलग्नभंगाना-ह क्रूरद्यूनेति शशितनू क्रूरद्यूनवृतान्विते भंगाय भवतः द्यूनं वृतमावृतं ययोस्ते द्यूनवृते च अन्विते च द्यूनवृ-तान्विते क्रूरेण द्यूनवृता अन्विते ते तथा चंद्रस्य लग्न-स्य वा सप्तमक्रूराक्रांतं भवेत् यद्वा चंद्रो लग्नं वा क्रूरा-न्वितं भवेत्।तदा लग्नभंगःस्यादित्यर्थः।अस्ते सप्तमे ल-ग्नाच्चंद्राद्वा सितज्ञौ शुक्रबुधौ वाप्तोपि भंगाय लग्ने विधु-श्चंद्रःभंगाय द्विषि षष्टेसोमासिताधिपाःभंगाय स्युःसोम-श्चंद्रः सितः शुक्रः अधिपाः स्वामिनः लग्नांशद्रेष्काणा-नाम् अत्र षष्ठं लग्नादेव नतु चंद्रात् सोमग्रहणात् सितः शुक्रः सेंदुः सचंद्रः भंगाय शुक्रयुक्तश्चंद्र इत्यर्थः। अं-शपो नवांशाधीशो विनष्टोस्तंगतो भंगाय स्यात्॥१॥

अतूर्यकायकेंद्रगः सुहृत्स्वसौम्य-
वर्गयुक्सुहृच्छुभेक्षितः शुभःशशीम-
यूखमांसलः ॥ २ ॥

अथ सप्तमदशमचंद्रस्य विशेषमाह प्रमाणिका।तु-र्यचतुर्थकायोलग्नं ताभ्यामन्यानि अतूर्यकायानितानि च तानि केंद्राणिच तत्र गतः सप्तमदशमग इत्यर्थः।श-

शी शुभः स्यात् कथंभूतः सुहृदित्यादि सुहृच्चस्वश्चसौम्यश्च तेषां वर्गःतेन युनक्तीति तथा सुहृद्वर्गगःस्ववर्गगः सौम्यवर्गगावित्यर्थः सुहृच्चशुभश्चताभ्यामीक्षितः सुहृद्दृष्टः शुभदृष्टश्चेति बहुमांसमस्त्यस्यासौ मांसलः "सिध्मादिभ्यश्च"इति मत्वर्थीयो लः।मयूखैः किरणैर्मांसलः रश्मिभिः पुष्टइत्यर्थः सप्तमदशमोपि चंद्र एवंविधः शुभः स्यादितिभावः।अत्रापि 'अकायकोणकेंद्रेति' पाठः। तत्र अकायकोणकेंद्राणि चतुर्थसप्तमदशमनवमपंचमानि। तथाच शौनकः " त्रिकोणसप्तमांबरव्ययोपगो विलग्नतो हिमद्युतिः शुभर्क्षगः शुभेक्षितश्च शोभनः " इति । अयंव्ययस्थोपिगृहीतः सतु नारदेन महादोषेषु पठितो अतोसौ ग्रंथकृता त्यक्तः ॥ २ ॥

शशितनयसिताभ्यांनंदभद्रावुभाभ्यां जय इति तनुयाते जीव इत्येष जीवे। असुरसुरगुरुभ्यां स्थावरो ज्ञेज्यशुक्रैर्विजय इति विशुक्रं तं च जीमूतमाहुः ॥ ३ ॥

अथशुभयोगानाह। मालिनी। तनुयात इति प्रत्येकं संबध्यते। शशितनयो बुधः सितः शुक्रस्ताभ्यामनुगताभ्यां क्रमेण नंदभद्रौ योगौ स्तः। बुधेन लग्नग-

तेन नंदः शुक्रेण भद्र इति उभाभ्यां बुधशुक्राभ्यां लग्नगताभ्यां जय इति योगः जीवे गुरौ तनुयाते जीव इति योगः असुरसुराणां गुरू शुक्रगुरू ताभ्यां तनुयाताभ्यां स्थावर इति योगः ज्ञेज्यशुक्रैर्बुधगुरुशक्रैस्तनुयातैर्विजय इति योगः तमेवयोगं विशुक्रं शुक्रवर्जितं बुधगुरुभ्यां लग्नगताभ्यामित्यर्थः जीमूतं नाम योगमाहुर्मुनयः ॥ ३ ॥

इतिशुभफलयोगाः सप्तसप्तार्षिमुख्यैर्मुनिभिरभिहितास्ते जन्मयात्रास्वपिस्युः॥भजतियुवतिरेभिर्भूपसीमंतिनीत्वं ग्रहयुतिबलयोगादुत्तराधर्यमस्मिन् ॥ ४ ॥

अथैषांफलमाह—मालिनी । इतिसप्तशुभफलयोगाः सप्तर्षिमुख्यैर्मुनीद्रैरभिहितास्ते योगाः जन्मयात्रास्वपि स्युः न केवलं विवाहे किंतु जन्मकाले यात्राकाले च शुभफला इत्यर्थः। तात्कशुभफलमित्याह। भजतीति । एभिर्योगैर्युवतिः भूपसीमंतिनीत्वंभजति भूपस्य सीमंतिनी तस्या भावस्तथा 'नारी सीमंतिनीवधूः' इत्यमरः। राजपत्नी भवतीत्यर्थः। अस्मिन् शुभफलेग्रहयुतिबलयोगादुत्तराधर्यं स्यात् ग्रहाणां

युतिर्योगः तत्र बलयोगः सबलत्वं तस्मात् उत्तरं च अधरंच उत्तराधरे तयोर्भावः उत्तराधर्यं योगकर्तृग्रहाणां बलवशाच्छुभफलस्याधिक्यं न्यूनत्वं कल्पितमिति भावः ॥ ४ ॥

दिनकररुधिराभ्यां व्यालपातालव-
क्रौ क्षय इति रविपुत्रे सैंहिकेये तम-
स्कम् ॥ तनुगृहयुजिकेतावंतकस्ते-
षु शोकव्यसनविधनताभिस्तप्य-
ते पंकजाक्षी ॥ ५ ॥

अथ शुभयोगानाह–मालिनी। तनोर्गृहं तनुगृहं तेन युनक्तीति तनुग्रहयुक् तस्मिल्लग्नगतइत्यर्थः।एतत्प्रत्येकं संबध्यते। दिनकररुधिराभ्यां लग्नगताभ्यां क्रमेण व्यालपातालवक्रौ योगौ स्तः रविणा लग्नगतेन व्यालो भौमेन पातालवक्रइति रविपुत्रे शनौ लग्नगते क्षय इति योगः सैंहिकेये राहौ लग्नगते तमस्कमिति योगः केतौ लग्नगते अंतक इति योगः एवं पंच तेषु योगेषु पंकजाक्षी नारी शोकव्यसनविधनताभिः तप्यते।कर्मकर्तरिरूपम्।विधनताभिरिति करणं यद्वा कर्मणिरूपं तदाविधनताभिरिति कर्ता। एतत्प्रत्येकं फलम्॥५॥

तनुतुहिनमरीच्योरंगनाखेटदृष्टौ च-

रगृहगतयोः स्यात्कांतयुग्मं कुमार्याः। अविदिशि बलिनश्चेद्यायिनोयुग्मइंदावशुभदृशमुपेते कन्यकात्वन्यकाम्या ॥ ६ ॥

अथान्यदुष्टयोगद्वयमाह—मालिनी । तनुर्लग्नं तुहिनमरीचिश्चंद्रः तयोर्लग्नचंद्रयोः चरगृहगतयोः चरराशिस्थितयोः ।आधारे सप्तमी । अंगनाखेटशुक्रः तस्य दृष्टौ सत्यां चरराशिस्थौ लग्नचंद्रौ शुक्रेण दृष्टावित्यर्थः। चेद्यायिनो ग्रहा अविदिशिस्थिताः संतो बलिनः स्युः तदा कुमार्याः कांतयुग्मं भर्तृद्वयं स्यात् एतदुक्तं भवति जातके प्राच्यादिषु जीवबुधावित्यादिना दिग्बलार्थं न्यासे लग्नं प्राच्यां भवति चतुर्थमुदीच्यां सप्तमं प्रतीच्यां दशमं दक्षिण इति शिष्टान्यष्टौ तन्मध्यवर्तिषु चतसृषु विदिक्षु भवंति कोणगता दिग्विदिगित्युच्यते तस्या अन्या अविदिक् सा दिगेव प्राच्यादिका तस्यां स्थिताः यायिनो ग्रहाः लग्ने चतुर्थे सप्तमे दशमे चेत्यर्थः । यातुं शीलं येषां ते यायिनः स्थातुं शीलंयेषांते स्थायिनस्तएव पौराः उभयविलक्षण आक्रंदः । ते वराहेणोक्ताः । 'रविराक्रंदो मध्ये पौरः पूर्वे परे स्थितो यायी॥पौरा बुधगुरुरविजा नित्यं शीतांशुराक्रंदः॥केतुकुजराहुशुक्रा यायिनः'इति अयं

योगः शौनकेन स्पष्टमुक्तः "लग्नेंदूचरराशौ केंद्रस्थायायिनो यदा बलिनः॥ योषिद्ग्रहसंदृष्ट्या पतिद्वयं गच्छते नारी॥" इति। अथ द्वितीयंयोगमाह। युग्मइंदाविति। युग्मे समराशौ स्थिते इंदौ चंद्रे अशुभदृशं पापदृष्टिमुपेते प्राप्ते पापग्रहदृष्ट इत्यर्थः। तदा कन्यका अन्यकाम्यास्यात् काम्यते तत्काम्य मन्यस्य काम्यं यस्याः सा तथा परपुरुषकांक्षिणीत्यर्थः। तथा च शौनकः " क्रूरग्रहसंदृष्टे समर्क्षगे शशिनि भजति पतिमन्यम्। स्त्रीणामन्यत्र गते सौम्यैर्दृष्टे शुभं भवति।" इति ॥६॥

नरः प्रियो नीरजलोचनानां नर-
ग्रहैरुत्कटकांतिवीर्यैः ॥ नारी नृ-
णां चित्तहरा स्वभोगैर्नारीनभोगै-
र्बलशालिभिस्तु ॥ ७॥

अथ ग्रहविशेषेण फलवशात्फलांतराण्याह। उपजातिका। नरग्रहैः पुरुषग्रहैः उत्कटकांतिवीर्यैः कांतिश्च वीर्यं च उत्कटे कांतिवीर्ये येषां ते तथा अतिशयितप्रकाशैरतिबलैरित्यर्थः। तदा नीरजलोचनानां स्त्रीणां नरो भर्ता प्रियः स्यात् नारीनभोगैः स्त्रीग्रहैर्बलशालिभिः बलेन शालंते शोभंते ते बलशालिनः तदा नारी नृणां चित्तहरा प्रिया स्यात् कैः स्वभोगैः निजभोगकौशलैः पुरुषस्य नारी प्रिया स्यादित्यर्थः "बुधसूर्यसुतौ

नपुंसकाख्यौ शशिशुक्रौ युवती नराश्च शेषाः" इति। स्त्रीग्रहाद्वित्वे सति नारीनभोगैरिति बहुत्वं कथमुपपद्यते। उच्यते। शौनकीयेपि योषिद्ग्रहैरिति बहुत्वमस्ति अतोस्य पूज्यार्थत्वादित्यादिगतिश्चित्या ॥ ७ ॥

पतिरस्तपतिर्विरोचनः श्वशुरस्तत्प्रमदामदग्रहः ॥ अबलाबलिनो दिशंत्यमी सुदृशांतेष्वशुभं शुभंक्रमात्॥ ८ ॥

किंच वैतालीयं। सुष्ठु दृग्यासां ताः सुदृशः तासां स्त्रीणां पतिः अस्तपतिः सप्तमाधीशः स्यात् विरोचनः सूर्यःश्वशुरः मदग्रहः शुक्रस्तस्य श्वशुरस्य प्रमदा स्त्री श्वश्रूरित्यर्थः अमी पत्यादयः खचराः अबला निर्बलाः बलिनः सबलाः क्रमात्सुदृशां स्त्रीणां तेषु पत्यादिष्वशुभं शुभं दिशंति ददाति ॥ ८ ॥

शशिसूर्यसुतावनीसुतैररिनीचास्तगतैः करग्रहे ॥ अपितन्वधिपेन तप्यते ।नरपत्या नियतं नितंबिनी ॥ ९ ॥

किंच वैतालीयं।करग्रहे पाणिग्रहे पाणिग्रहसमये शशिसूर्यसुतावनीसुतैः चंद्रशनिभौमैःयथा तथावस्थितैररिनीचास्तगैःतैः अरिःशत्रुगृहंनीचगृहं अस्तमस्तमयः

तत्र गतैः। अपिः समुच्चये। तन्वाधिपेनापि अरिनीचास्तगतेन एवं योगे नितंबिनी स्त्री निरपत्या अपत्यरहिता सती नियतं निश्चितं तप्यते तापं प्राप्नोति। अत्र सप्तमभवने निर्बले सतीति प्रक्षेप्तव्यम्। तथा च शौनकः " लग्नपतौ रिपुभवने नीचे वा रविसुतारजनीकरैः। बलरहिते च द्यूने स्त्रीणां न भवंत्यपत्यानि " इति ॥ ९ ॥

कवेस्तृतीयस्य शुभाय रेखा लग्नं नभस्थो न भनक्ति भौमः। तद्वद्व्यये सौरिरपीतिरीतिर्जनेषु जागर्तितरां कुतस्त्या ॥ १० ॥

अथ शास्त्रविरुद्धं किंचिल्लोकेस्ति तदुपहसति उपजातिका। तृतीयस्य कवेः शुक्रस्य रेखा शुभाय भवेत् लग्नस्य ग्रहबलावलोकने गणनार्थं प्रतिग्रहमेकैका रेखा क्रियत इति ज्योतिर्विदां संप्रदायः। तत्र तृतीयः शुक्रः शुभ इति कृत्वा रेखा क्रियत इत्येका रीतिः नभःस्थो दशमस्थो भौमः लग्नं न भनक्ति लग्नभंगकर्ता न भवेदित्यन्या रीतिः तद्वद्व्यये द्वादशे सौरिः शनिरपि लग्नं न भनक्तीति तृतीया रीतिः इयं रीतिः पद्धतिर्जनेषु कुतस्त्या जागर्तितराम् इयं रीतिः सर्वथा निर्मूला लोकेषु कस्माद्धेतोर्जा-

ता अतिप्रसिद्धास्तीति अस्या न कुत्रापि मूलं दृ-
श्यत इत्यर्थः । कुतो जाता कुतस्त्या अतिशयिता
जागर्तीति जागर्तितरां आख्यातात्तरप् आम् च त-
दंतमव्ययम् ॥ १० ॥

उशना गुरुरिंदुनंदनः शशिजामित्र-
गपापतापहृत् ॥ नवपंचमकेंद्रमित्र-
भप्रणयीपुष्टदृशा विधुं स्पृशन् ॥ ११ ॥

अथ जामित्रदोषस्य भंगमाह—वैतालीयं । उशना
शुक्रः गुरुर्बृहस्पतिः इंदुनंदनो बुधः अयमेकोपि श-
शिजामित्रगपापतापहृत्स्यात् शशिनः जामित्रं ग-
च्छतीति तथा स चासौ पापश्च तस्य तापः अशुभं
तं हरतीति तथा चंद्रात्सप्तमः पापस्य दोषहर्ता भव-
तीत्यर्थः । कथंभूतः नवपंचमेति नवपंचानां पूरणे न-
वपंचमे ते च केंद्राणि च नवपंचमकेंद्रं तच्च तन्मि-
त्रभं च तत्र प्रणयोस्त्यस्यासौ तथा नवपंचमकेंद्रग-
तः सन्मित्रगृहस्थित इत्यर्थः अपि च पुष्टदृशा विधुं
स्पृशन् पूर्णदृष्ट्या चंद्रं पश्यन्नित्यर्थः । अत्र केंद्रस-
प्तमविरहितं ज्ञेयमशुभत्वात् । तथा चोक्तं। " हरिज-
दिवसचंद्रात्सप्तमक्रूरदोषक्षयकृदमरपूज्यः सोमपुत्रः
सितो वा । उदयहिबुकधर्मव्योमपुत्रालयस्थो यदि
च सकलदृष्ट्यालोकयेच्छीतरश्मिम् " इति ॥ ११ ॥

हिमरश्मिनवांशकात्खलोयदि खे-
टः शरसायकांशके ॥ अयमन्यगुणै-
र्न हन्यते निबिडैरप्युपसर्गडंबरः ॥१२॥

तत्र परिपूर्णजामित्रदोषे अभंगत्वमाह—वैतालीयं। यदि हिमरश्मिनवांशकाच्चंद्रस्थितनवांशकात्खलखेटः शरसायकांशके पंचपंचाशत्तमे नवमांशे भवति। अयमुपसर्गडंबरः दोषाडंबरः निबिडैः परिपूर्णैरप्यन्यगुणैर्न हन्यते चेज्जामित्रगोपि पापःयदि षड्भांतरे भवति तदायं दोषः केनापि गुणेन न भज्यत इत्यर्थः॥ १२॥

मोघाः शिखिदग्धबीजवद्योगाः केपि
शरीरधारिणः॥ दृढगूढफलोदयाः परे
पर्णाकीर्णहुताशराशिवत् ॥ १३ ॥

अथैषां योगानां विचारगम्यत्वमस्तीत्याह—वैतालीयं। केपि केचन शरीरधारिणः संपूर्णाः प्रत्यक्षइवदृश्यमाना योगा निष्फलाः स्युः किंवत् शिखिदग्धबीजवत् शिखिना वह्निना दग्धं यद्बीजं तद्वत् यथा वह्निदग्धं बीजं प्रत्यक्षसंपूर्णावयवमपि कार्यक्षमं न भवेत्तद्वत्केचिद्योगाः संपूर्णाः प्रत्यक्षं दृश्यमाना अपि मोघाः स्युरित्यर्थः। निर्बलानां ग्रहाणां संपूर्णा अपि योगाः मोघाः स्युरिति भावः। परे केचन योगाः दृढ-

गूढफलोदयाः दृढगूढः आच्छन्नः फलोदयः फलप्राप्तिर्येषां ते तथा किंवत् पर्णाकीर्णहुताशराशिवत् पर्णैः आकीर्णः आच्छन्नश्चासौ हुताशराशिश्च तद्वत् यथा पर्णाच्छन्नोवह्निः प्रत्यक्षमदृश्यमानोपि स्वकार्यक्षमोस्त्येव तथा केचन योगा अपीत्यर्थः । सबलानां ग्रहाणाअल्पयोगोपि परिपूर्णफलः स्यात् इत्यर्थः॥ १३॥

इति यः प्रतिकूलकारकग्रहभावांश-
निवेशदृष्टिभिः ॥ तन्वादिफलेषुदत्त-
दृक्सप्राप्नोत्यवतंसतां सताम् ॥ १४ ॥

इति श्रीविवाहवृंदावने ग्रहयोगादि-
बलाबलाध्यायस्त्रयोदशः ॥ १३ ॥

एवंविधविचारवतो दैवज्ञस्यजगत्सुपूज्यत्वं स्यादित्याह- वैतालीयम् । सदैव वित् सतां विदुषा मवतंसतां प्राप्नोति अवतंसः कर्णपूरः तस्य भावस्तथा सतामपि वंद्यः किमुतान्येषामिति । स कः य इत्युक्तप्रकारेण प्रतिकूलकारकग्रहभावांशनिवेशदृष्टिभिः कृत्वा तन्वादिफलेषु दत्तदृक् प्रतिकूलं दुष्टं कुर्वंति ते प्रतिकूलकारकाः ते च ते ग्रहाश्च भावाश्च अंशाश्च प्रतिकूलकारकग्रहभावांशास्तेषां निवेशः स्थानं तत्र दृष्टयः ताभिः तन्वादीनां फलानि तेषु दत्ता दृग्येन स तथा दुष्टकारका ये ग्रहा भावाश्च अं-

शाश्च तेषां यानि स्थानानि तेषु दृष्टिं दत्वा तन्वादिफलेषु च दृष्टिं दत्वा तद्बली बलं विचार्य यदादिष्टं तदन्यथा न स्यादिति कृत्वा स दैववित्सतां वंद्यः स्यादित्यर्थः ॥ १४ ॥

इतिश्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकायां ग्रहयोगादिबलाबलाध्यायस्त्रयोदशः ॥१३॥

## अथ मिश्राध्यायः ॥

उल्लिख्य सामुद्रिकलक्षणानि वरः कुमारीं वृणुयान्निमित्तैः । एवं कुमारीवरमप्युदर्कैस्तद्धैकधारं निरधारि धीरैः ॥ १ ॥

अथ स्त्रीपुंसयोः सामुद्रिकलक्षणपूर्वको मिश्राध्याय आरभ्यते तत्रादौ तत्कारणमाह- उपजातिका। वरः कुमारीं वृणुयात् कैर्निमित्तैः यल्लिंगिबालकेत्यादिना वक्ष्यमाणैः किं कृत्वा सामुद्रिकलक्षणानि उल्लिख्य प्रकटीकृत्य समुद्रेण प्रणीतानि लक्षणानि सामुद्रिकलक्षणानि सामुद्रिकानि स्त्रीपुंसयोः शुभाशुभलक्षणानां मुख्यप्रवर्तकः समुद्र एव यथा व्याकरणस्य पाणिनिः छंदसश्चपिंगलः अतस्तानि सामुद्रिकल-

लक्षणानीत्युच्यन्ते। कुमार्याः सामुद्रिकलक्षणैः प्रश्नकाले निमित्तादिभिश्च शुभं ज्ञात्वा तां वरयेदित्यर्थः। एवं वरमपि कुमारी वरयेत् वरस्यापि शुभं ज्ञात्वा तां वरं कुमारी वृणुयादित्यर्थः। एवं चेत्तर्हि प्रागुक्तेन फलसंदर्भेण किमित्याशंकायामाह। उदर्क इति।हि यस्मात्कारणादुदर्कः उत्तरकालीनं फलं धीरैर्गर्गादिभिरेकधा एकप्रकारमरं निश्चितं न निरधारि न निर्धारितं भाविफलमनेनैव प्रकारेण ज्ञेयमिति न निश्चितमितिभावः ॥ १ ॥

स्वप्नो निमित्तं शकुनाः स्वकर्म शरीरमागंतुकमद्भुतानि ॥दोषाति चारग्रहचारकालकाम्यानि चैवं विविधः फलाध्वा ॥ २ ॥

तदेव प्रपंचमाह–इंद्रवज्रा। एवं स्वप्नादिकः फलाध्वा फलमार्गः विविधोनेकप्रकारोस्ति स्वप्नो निद्राविशेषजज्ञानं। ननु 'स्यान्निद्राशयनं स्वापः स्वप्नः संवेश' इत्यभिधाने निद्रास्वप्नयोरभेदाः। सत्यं। तथाप्यवांतरविशेषाद्भेदोस्त्येव वनगहनवत्।तथाहि जाग्रत्स्वप्नसुषुप्तितुरीया इत्यवस्थाचतुष्टये योगशास्त्रे प्रसिद्धं तत्र जगतः प्रसिद्धा मनसो निरिंद्रियप्रदेशा-

वस्थानं निद्रा साद्विधा स्वप्नः सुषुप्तिरिति यत्र दुष्टांतः-करणजं ज्ञानमस्ति सा स्वप्न इत्युच्यते यत्र तु एतन्नास्ति सा सुषुप्तिः एतात्रितयं सर्वजनानुभवसिद्धं तिसृभ्योविलक्षणा सा तुरीया सा च योगिनामेव ।स्वप्नावस्थायां तद्गतं ज्ञानमपि स्वप्नशब्देनोपचर्यते। यथा श्रीमद्भागवते' स्वप्नो निद्रानुगो यथा।'इति नैषधकाव्येपि ।,न सा निशि स्वप्नगतं ददर्श तम्' इति। अतस्तल्लक्षणमाहुर्नैयायिकाः । ' योगजधर्माननुगृहीतस्य मनसो निरिंद्रियप्रदेशावस्थानं निद्रा तत्र दुष्टांतः-करणजं ज्ञान स्वप्नः 'इति ।एवमत्र स्वप्नशब्देन निद्राविशेषजं ज्ञानमुच्यते तस्मात्फलादेशः अयमेको मार्गः । निमित्तानि क्षुतदुर्वचनादीनि शकुनाः पूर्णकुंभादयः स्वकर्म निजप्राचीनकर्मविपाकः शारीरं सामुद्रिकलक्षण दि आगंतुकं भविष्यद्वस्तुकं जातकादि अद्भुतानि उत्पाताः दिव्यभौमांतरिक्षाः दोषाः वातपित्तश्लेष्मादयः स्वाभाविकाः शरीरस्थाः तेषामभिचारः प्रचारः स्वरविधानादिग्रहचारा गोचरवक्रमार्गास्तोदयः कालः संवत्सरमासलग्नादिः काम्यं कांक्षितं ऐहिकं पुरुषचेष्टादे । तथा च शौनकः "तिथिकरणर्क्षनिशाकरविलग्नपरिकल्पनामयम् । गर्गः पाणिग्रहणेषु फलं वदंति यवना वसिष्ठश्च।।ग्रहराशिगो-

चरभवं जातकविहितं च देवलः प्राह। शकुनिरुतज्ञाः शकुनैर्निमित्तकुशलाः निमित्तैश्च कर्मसमुत्थं चान्ये कुलदेशस्त्रीस्वभावमपरे तु इच्छंत्यन्ये मुनयः कालविशेषाद्विशेषफलमिति। एवं स्वभावादिः फलमार्गो नानाविधोस्ति अतो वरवध्वोः सामुद्रिकलक्षणस्वस्थारिष्टादिकमप्यस्माभिरप्युच्यत इतिभावः।तथा चाहुः। 'जातकनिमित्तशुद्धां शुभलक्षणसंस्थितां कुलोद्भूताम्। वरयेत्सुतसौख्यार्थी यवीयसीं कन्यकाम्' इति। यवीयसीं न्यूनां वयसा प्रमाणतश्च ॥ २ ॥

प्राक्कर्म बीजं सलिलानलोर्वीसंस्कारवत्कर्म विधीयमानम् ॥ शोषाय पोषाय च तस्य तस्मात्सदा सदाचारवतां न हानिः ॥ ३ ॥

एवं फलमार्गेष्वनेकेषु सत्सुतत्समाधानमाह। उपजातिका।एतत्प्रागेव व्याख्यातप्रायम्। पूर्वजन्मनि यदुपार्जितं सदसत्कर्म तत्प्राक्कर्मेत्युच्यते तदेव दैवं यदैहिकं कर्म तत्प्रयत्नः पौरुषं चोच्यते यत्प्राक्कर्म तस्य शोषाय क्षयाय पोषाय पुष्टयै च अधुना विधीयमानं क्रियमाणं कर्म भवतीत्यन्वयः। किंवत् बीजं सलिलानलोर्वीसंस्कारवत्। सलिलं जलमनलोऽग्निः उर्वी

भूमिः आसां संस्कारः तद्वत् । यथा सद्बीजं सद्भिः सलिलादिसंस्कारैः संस्कृतं सदुदेति वर्धते च अन्यथा क्षीयते तद्वत्सत्प्राक्कर्म ऐहिकेन सत्प्रयत्नेन वर्द्धते अन्यथा क्षीयत इति। तस्मात्कारणात्सदाचारवतां श्रुतिस्मृत्यादिषु यो विहितः स सदाचारस्तद्वतां पुरुषाणां सदा कदाचिदपि न हानिः स्यात् । अशुभमपि कर्मफलं सत्प्रयत्नेन निवार्यत इत्यादिकं प्रपंचितं प्राक् ।तस्मात्स्वप्ननिमित्तशकुनसामुद्रिकलक्षणादयोऽपि प्रयत्नलक्षणा अवश्यं विलोकनीया इति सिद्धम् एतदस्माभिः सप्रपंचं प्रथममेव निरूपितम् ॥ ३ ॥

फलेद्यदि प्राक्तनमेव तत्किं कृष्याद्युपायेषु परः प्रयत्नः ॥ श्रुतिः स्मृतिश्चापि नृणां निषेधविध्यात्मके कर्मणि किं निषण्णा ॥ ४ ॥

अथ केचित्प्राक्कर्मैव फलतीति मन्यमानास्तन्मतं निरस्यति । विपरीताख्यानकी । प्राग्भवं प्राक्तनं कर्म। यदि प्राक्तनं कर्मैव फलेन्न तु प्रयत्नस्तदा कृषिवाणिज्यादिषूपायेषु आगमप्रकारेषु परः प्रयत्नः किं कथमेतेषु कृष्यादिषु प्रयत्नः कर्त्तव्यः। यदवश्यं भावि तद्भवत्येवेति कृत्वा सर्वजनेन कृष्यादिषु

न प्रवर्तितव्यं स च प्रवर्तते अतः प्रत्यक्षविरुद्धं तादित्यर्थः। न केवलं प्रत्यक्षविरुद्धं किंच आगमविरुद्धमपीत्याह। श्रुतिरिति। नृणां निषेधविध्यात्मको निषेधविधिरूपे कर्मणि श्रुतिः स्मृतिश्च किं निषण्णा कथं प्रवृत्ता।'आत्मानं सततं गोपाय'इत्यादि श्रुतीनां। "न वृक्षमारोहेन्न कूपमवेक्षेत न बाहुभ्यां नदीं तरेन्न संशयमभ्यापद्येतेत्यादि" आश्वलायनादिकल्पानां 'श्रीकामः पुष्टिकामो वा ग्रहयज्ञं समाचरेत् ' इत्यादियाज्ञवल्क्यादिस्मृतीनां चिकित्सादिशास्त्रस्य च वैय्यर्थ्यप्रसंगः स्यादित्यर्थः। एतदपि सप्रपंचं प्रथममेव निरूपितं अतो यदुक्तं तत्सम्यक् ॥ ४ ॥

छायां विधोर्न ध्रुवमृक्षमालामालो-
कयेद्यो न च मातृचक्रम् ॥ खंडं पदं
यस्य च कर्दमादौ कफश्च्युतो मज्ज-
ति चांबुचुंबी ॥ ५ ॥

अथ प्रकृतं तत्र तावत्स्वस्थारिष्टान्याह श्लोकसप्तकेन। उपजातिका। अमुं वरं न वृणीरन्नित्युत्तरेण सर्वत्र संबंधः।अमुकं यः विधोः छायां कलंकं न आलोकयेन्न च ध्रुवं नक्षत्रमालां नक्षत्रमंडलं न च मातृचक्र-

मालोकयेन्मातृसंज्ञाः ताराविशेषास्ताराचक्रं मंडलं यस्य च कर्दमादौ खंडं पदं भवति कर्दमधूलिप्रभृतिषु क्षिप्तपदस्य प्रतिरूपं खंडं भवतीत्यर्थः । यस्य कफः श्लेष्मा उदके च्युतः निष्ठ्यूतः सन् अंबुचुंबी मज्जति अंबु चुंबतीत्यंबुचुंबी जलमाकृष्य ब्रुडतीत्यर्थः ॥ ५ ॥

उरः पुरः शुष्यति यस्य चार्द्रं न
मांति तिस्रोऽङ्गुलयश्च वक्रे ॥ स्नातस्य मूर्द्धन्यपि धूमवल्ली निलीयते
रिक्तमुखः खगो वा ॥ ६ ॥



यस्य च उरः उरस्थलम् उदकचंदनादिना आर्द्रं क्लिन्नं सदन्यस्माच्छरीरस्थानात्पुरः पूर्वमेव शुष्यति शुष्कं भवति । यस्य च वक्रे मुखे कनिष्ठांगुष्ठौ विहाय मध्यमास्तिस्रोंगुलयः परस्परकुक्षिसंलग्नाः न मांति न समाविशंति । अपि वार्थे । यस्य वा उदकेन स्नातस्य मूर्धनि मस्तके धूमवल्ली धूमशिखा स्यात् । यस्य वा मूर्धनि फलधान्यादिना रिक्तमुखः रिक्तचंचुः खगः पक्षी निलीयते निर्विशति ॥ ६ ॥

नाकीर्णकर्णः शृणुयाच्च घोषं नो वा सु-

भुक्तोपि धृतिं न धत्ते॥ निश्रीरकस्मा-
त्सुतरां च सुश्रीः कृशः स्थवीयान-
पि योप्यकस्मात् ॥ ७ ॥

यश्चांगुल्यादिना आकीर्णकर्णः आवृतकर्णरंध्रः सन् अंतर्वर्तिनं स्वाभाविकं घोषं न शृणुयात्। यो वा सुभुक्तोपि अतिशयितं भुक्तोपि धृतिं तृप्तिं न धत्ते । अतिभुक्तः सन्नपि तृप्तिं न प्राप्नोतीत्यर्थः।यश्चसुश्रीरप्यकस्मात्सुतरां निश्रीर्भवति यश्चानिश्रीरप्यकस्मात्सुतरां सुश्रीर्भवति। अपिः वार्थे। निर्गता श्रीः शोभा यस्यासौ तथा । यश्च कृशोप्यकस्मात्स्थवीयान् भवति यश्च स्थवीयानकस्मात्कृशो भवति । अतिशयितः स्थूलः स्थवीयान्। स्थूलदूरेतिस्थवादेशः ॥ ७ ॥

अतीव तुच्छं बहु चात्त्यहेतोरतीत-
सात्म्यः सदसत्प्रवृत्तौ ॥ अप्यंगुलि-
क्रांतविलोचनांतो न मेचकं चांद्रक-
मीक्षते यः॥ ८ ॥

यश्च अहेतोः ज्वरादिहेतुं विना अतिशयितं अतीवतुच्छमल्पम् अत्ति भक्षयति। भस्मकादिव्याध्यादिहेतुं विना अतीव बहु भूरि अत्ति यश्च सदसत्प्रवृत्तौ विषये अतीतसात्म्यः सच्च असच्च सदसती तत्र प्रवृत्तिः तस्या-

मतीतं त्यक्तं सात्म्यं स्वाभाविकं येन स तथा । यः स्वभावेन सत्प्रवृत्तिः सन् स चेदसत्प्रवृत्तिरित्यर्थः ।अपि वार्थे योवा अंगुलिक्रांतविलोचनांतः सन् चंद्रकं मेचकं नेक्षते । अंगुलीभिः क्रांतौ आक्रामितौ लोचनांतौ नेत्रप्रांतौ येन स तथा । मेचकवर्णो मयूरपत्रनिभः चंद्रकं खद्योता इव द्योतमानं स्वानुभवसिद्धम् ॥८॥

मध्येललाटं मणिबंधधारी न चा-
लिपकां पश्यति यः कलावीम् ॥ अ-
हेतुकं यः शवगंधिगात्रः सर्वत्र सी-
मंतितमूर्धजो वा ॥ ९ ॥

मध्ये ललाटस्येति मध्येललाटं 'पारेमध्ये षष्ठ्या वा' इत्यव्ययीभावः । मणिबंधं धारयतीति मणिबंधाधारी यो ललाटमध्ये मणिबंधं धृत्वा अलिपकां कृशां कलावीं न पश्यति । तलहस्ताधस्तत्संधिर्मणिबंधः तदधो हस्तभागः । कलावीं स्त्रीणां करभूषणस्थानम्। यश्च अहेतुकं । अकारणं शवगंधिगात्रः शवस्य गंध इव गंधो येषां तानि शवगंधीनि तानि गात्राणि यस्यासौ तथा ।यो वा सर्वत्र सीमंतितमूर्धजः सीमंताः संजाता येषां ते सीमंतिताः ते मूर्धजाः केशा यस्यासौ तथा । सीमंतः स्त्रीणां ललाटादूर्ध्वं केशवेशविशेषः प्रसिद्धः ॥ ९ ॥

अपि क्षरद्रोमनखः शरीरात्सद्यःस्र-
वद्वामविलोचनो वा ॥ निरीक्षते स-
त्वममानुषं वा विस्रस्तनासानयन-
श्रुतिर्वा ॥ १० ॥

अपि वार्थे । यो वा शरीरात्क्षरद्रोमनखः क्षरंति गलंति रोमाणि नखानि च यस्यासौ तथा । यो वा अमानुषं मानुषादन्यं सत्वं प्राणिनं पिशाचादिकं निरीक्षते । यो वा विस्रस्तनासानयनश्रुतिः नासा नासिका नयने नेत्रे श्रुतिः कर्णौ विस्रस्ताः शिथिलीभूताः नासानयनश्रुतयो यस्यासौ तथा ॥ १० ॥



आक्षिप्यमाणो दिशि दक्षिणस्यां जा-
गर्ति याने धिकृतः खरादौ ॥नेदिष्टदि-
ष्टांतममुं कुमार्योऽनार्याः प्रदानाय व-
रं वृणीरन् ॥ ११ ॥

इंद्रवज्रा । यो वा स्वप्नमध्ये खरादौ गर्दभादौ यानेऽधिकृतः आरूढो दक्षिणस्यां दिशि आक्षिप्यमाणःप्रेर्यमाणः सन् जागर्ति प्रबुध्यति अमुं वरंआर्या ज्ञातारः कुमार्याः प्रदानाय न वृणीरन् । तत्र कारणमाह । नेदिष्टेति । नेदिष्टः अतिसमीपः दिष्टांतः प्रलयो यस्यासौ

तथा। अतिशयेन अंतिकः नेदिष्ठः 'अंतिकबाढयोर्नेदसाधौ'इति नेदादेशः । दिष्टांतः प्रलयोऽत्यय इत्यमरः। आसन्नमृत्युं वरं न वरेयुरित्यर्थः। अर्थादेवंविधां कुमारीं वरोपि ॥ ११ ॥

छायां निरीक्ष्य क्षणमंतारिक्षं पश्यन्न
योनिश्चलनेत्रपातः॥शुभ्राभ्रसच्छाय-
मिह स्वकायं पश्येत्स नश्येद्विकृतौ
विकारः ॥ १२ ॥

अथ छायालक्षणेनारिष्टज्ञानमाह । इंद्रवज्रा । निश्चलः स्थिरः नेत्रयोः पातो यस्यासौ तथा । यः निश्चलदृष्टिः सन् क्षणं स्वस्य छायां निरीक्ष्य ततः क्षणमंतरिक्षं पश्यन् तथा स्वकायं स्वदेहं शुभ्राभ्रसच्छायं न पश्येत् स नश्येन्नाशं प्राप्नोति।शुभ्राणि शुभ्राभ्रमेघाः तै समाना छाया यस्यासौ तथा। समानस्य सादेशः।इहास्मिन्स्वकाये विकृतौ दृष्टायां सत्यां विकारः स्यात् यस्यांगस्य विकारो दृष्टस्तदंगस्य तथा विकारः स्यादित्यर्थः ॥ १२ ॥

प्रदक्षिणावर्तशरीररोमा वृषस्वनः फे-
निलमूत्रपातः॥नात्यल्पपार्ष्णिर्मनसा
गभीरो धीरोन्नतारंभरुचिर्यशस्वी १३

अथ श्लोकत्रयेण पुरुषलक्षणमाह । उपजातिका ।

प्रदक्षिणं सव्यमावर्तः परिभ्रमो येषां तानि प्रदाक्षिणावर्तानि तानि शरीररोमाणि यस्यासौ तथा। वृषस्य स्वन इव स्वनः शब्दो यस्यासौ तथा । फेनोस्ति यस्मिन्नसौ फेनिलः 'फेनादिलच्च'इति इलच्।फेनिलः मूत्रस्य पातो यस्यासौ तथा। नअत्यल्पः अतिलघुः पार्ष्णिर्यस्यासौ तथा।नाकादित्वान्ननलोपः। पार्ष्णिर्गुल्फयोरधःप्रदेशः'तद्ग्रंथी घुटिके गुल्फौ पुमान् पार्ष्णिरधस्तयोः'इत्याभिधानात् । मनसागभीरोगंभीरः। प्रकृत्यादिभ्यश्चेतितृतीया।'निम्नंगभीरं गंभीरम्' इत्यमरः । धीरा निःसंदेहावर्धमानाआरंभेषु कार्यारंभेषु रुचिः प्रीतिर्यस्यासौ तथा। प्रशस्तं यशोस्त्यस्यासौ यशस्वी। प्रशंसायां मत्वर्थे विनिः॥ १३ ॥

स्निग्धेक्षणत्वङ्नखदंतकेशा युवा सुवासाः परिवीतचेष्टः ॥ न स्त्रीमुखो निप्रभशांतमूर्तिर्न चातिकृष्णेक्षणतारको वा ॥ १४ ॥

आख्यानकी। ईक्षणे नेत्रे स्निग्धाः सस्नेहाः ईक्षणे च त्वक्च नखाश्च दंताश्च केशाश्च यस्यासौ।तथा युवा मध्यमवयस्कः।सुष्ठु वासोयस्यासौ तथा अमलिनवस्त्रः। परिवीता अतिसंवृता चेष्टा शरीरेंगितं यस्यासौ तथा।

'व्येञ्संवरणे' ।स्त्रियाः सुखमिव मुखं यस्यासौ स्त्रीमुखः न च स्त्रीमुखः ।नितरां प्रभा यस्याः सा निप्रभा शांता मूर्तिर्यस्यासौ तथा। अतिकृष्णेक्षणतारको वा न भवति ईक्षणयोर्नेत्रयोस्तारके ईक्षणतारके अतिकृष्णे ईक्षणतारके यस्यासौ तथा ॥ १४ ॥

औचित्यचारी शुचिरिंगितज्ञो वि-
शालहस्ताननबाहुवक्षाः ॥ सर्वोपि
सत्वाकृतिमान्कुलीनःकन्याप्रदाना-
य वरो नरोगी ॥ १५ ॥

उपजातिका । उचितं योग्यं तस्य भावः औचित्यं तच्चरति आचरतीति तथा । शुचिरनिंदितः चारुः।इंगितं परस्परचेष्टितं तज्जानातीति तथा विशालं विस्तीर्णं हस्तौ च आननं च बाहूच वक्षश्च यस्यासौ तथा । मुख्यलक्षणान्याह । सर्वोपीति । सर्वोपि एभिः सर्वलक्षणैः संपन्नोपि नरः सत्वाकृतिमान् कुलीनः न रोगी स्यात् । सत्वस्य आकृतिर्यस्यासौ तथा । सात्विकप्रकृतिरित्यर्थः । कुलीनो विख्यातसत्कुलप्रसूतः । न रोगी अव्याधितः । किमर्थं कन्याप्रदानाय। एवं वरलक्षणान्युक्त्वा वधूलक्षणान्याह ॥ १५ ॥

श्मश्रुश्यामोन्नतोष्ठी पृथुकरचरणा
ह्रस्वरुक्षाग्रकेशा निःशौचा रोम-

शांगी कृशकुटिलचलत्क्रूरसच्छद्मदृष्टिः ॥ वामावर्ता विशालोन्नतविकटनटद्भ्रूललाटा स्पृशंती नोर्वीमंत्यांगुलिभ्यामनियतबहुभुग्गेहिनी देहिनीरुक् ॥ १६ ॥

स्रग्धरा । श्मश्रुभिः श्यामौ श्मश्रुश्यामौ तौ उन्नतौ उच्चौ ओष्ठौ यस्याः सा तथा।नासिकोदरेतिङीप् । करौ च चरणौ च करचरणं पृथु करचरणं यस्याः सा तथा । पृथुहस्तापृथुचरणा चेति ।रुक्षाणि अस्निग्धानि अग्राणि येषां ते रुक्षाग्राः ह्रस्वा रुक्षाग्राः केशा यस्याः सा तथा।अत्र ङीषो विकल्पान्न ङीष्। शुचेर्भावः शौचं निःशौचा शौचहीना। रोमाणि संति येषु तानि रोमशानि । लोमादित्वान्मतुबर्थेशः । रोमशानि अंगानि यस्याः सा तथा।अंगगात्रेति ङीष् कृशा लघुः कुटिला वक्रा चलंती अस्थिरा क्रूरा उग्रा सच्छद्मा सकपटा । 'उपाधिश्छद्मकैतवे' इत्यमरः । एवंविधा दृष्टिर्यस्याः सा कृशकुटिलचलत्क्रूरसच्छद्मदृष्टिः । वामा अप्रदक्षिणा आवर्ता रोमावर्ता यस्याः सा तथा। विकटं विसदृशं नटतः नृत्यतः ते विकटनटती ते भ्रुवौ ललाटंच तद्विकटनटद्भ्रूललाटं ।विशालं विस्तीर्णम् ।

उन्नतमुच्चं विकटनटद्भूललाटं यस्याः सा तथा बहृचत्वान्नङीषू विशालोन्नतललाटा विकटनटद्भ्रू श्चेत्यर्थः । अंत्यांगुलिभ्याम् । कनिष्ठिकोपकनिष्ठिकाभ्याम् उर्वीभूमिं न स्पृशंती अर्थाच्चरणस्य यस्याश्चरणगतकनिष्ठिकोपकनिष्ठिके भूमिं न स्पृशत इत्यर्थः। अनियतमसंख्यातं बहु भूरि भुनक्तीति अनियतबहुभुक् एवंविधा गेहिनी गृहिणी देहिनीरुक् स्यात् देहोस्ति यस्याः सा देहिनी 'स्त्री रुग्रुजाचोपताप' इत्यमरः। सा स्त्री मूर्तिमान् रोग एवेत्यर्थः॥ १६॥

या स्फिग्ललाटोदरलंबिनी सा स्या-
त्कांतकांतानुजताततहंत्री ॥ नितंबि-
नी स्वल्पनितंबगुह्या द्रुह्यात्पतिं
दीर्घगला कुलघ्नी ॥ १७ ॥

उपजातिः। या नितंबिनी स्त्री स्फिग्ललाटोदरलंबिनी सा क्रमेण कांतकांतानुजतातहंत्री स्यात् । 'स्त्रियां स्फिजौ कटिप्रोथौ' इत्यमरः । स्फिजौ च ललाटं च उदरं च तैर्लंबते सा तथा। दीर्घस्फिक् दीर्घललाटा दीर्घोदरीत्यर्थः । कांतश्च कांतानुजतातौ च ते तथा कांतो भर्त्ता कांतानुजो भर्तृकनीयान् कांततातः श्वशुरस्तान् क्रमेण नाशयतीति। या स्वल्पनितंबगुह्या सा पतिं द्रुह्यात् विरोधयति।

'पश्चान्नितंबः स्त्रीकटचाम्' इत्यमरः । गुह्यं योनिः स्वल्पनितंबा स्वल्पगुह्या चेति । या दीर्घगला सा कुलघ्नी भर्तृकुलनाशिनी ॥ १७ ॥

निःस्वातिह्रस्वा धमनौ पुरंध्री प्रायेण तत्रातिपृथुः प्रचंडा ॥ कपोलकूपा हसितेप्यशीला कूर्मोदरी दुःखदरी दुरात्मा ॥ १८ ॥

उपजातिः । या स्त्री धमनौ शिरायामतिह्रस्वा अतिकृशा सा पुरंध्री निःस्वा निर्धना भवति । यस्या अतिकृशाःशिरा इत्यर्थः।'नाडी तु धमनिःशिरा'इत्यमरः।'दाराः स्यात्तु कुटुंबिनी पुरंध्री' इत्यमरः । तत्र तस्यां धमनौ या अतिपृथुः सा प्रचंडा अत्युग्रा स्यात् । यस्याः शिरा अतिस्थूला इत्यर्थः। या हसिते हास्ये सति कपोलकूपा कपोलयोर्गंडयोः कूपौ गर्तौ यस्याः सा तथा सा अशीला दुराचारा भवति । या कूर्मोदरी कूर्मसदृशजठरा सा दुःखदरी दुरात्मा भवति ।दुःखस्य दरीव दरी दुःखदरी दुःखगुहा दुरात्मा दुष्टस्वभावा ।' डाबुभाभ्यामन्यतरस्याम् 'इति डाप्॥

रेखाभिरंगुष्ठतलेंगनानां पुंस्त्रीप्रसूतिर्विपुलाल्पिकाभिः॥ अच्छिन्नभिन्ना-

भिरखंडमायुः खंडं तदन्याभिर-
मूभिरस्याः ॥ १९ ॥

एवं वरवध्वोः सर्वशरीरलक्षणमुक्त्वा विशिष्टं हस्तचरणगतरेखालक्षणमाह श्लोकसप्तकेन। इंद्रवज्रा। अंगुष्ठतले हस्तांगुष्ठमूलाधःस्थिताभिः रेखाभिः विपुलाल्पिकाभिः क्रमेण पुंस्त्रीप्रसूतिर्वाच्या। यावत्यो विपुलरेखास्तावंतः पुत्राः यावत्यः कृशास्तावत्यः कन्या इत्यर्थः। अमूभिः रेखाभिः अच्छिन्नभिन्नाभिःअच्छिन्नाभिः अभिन्नाभिश्च अस्याः पुंस्त्रीप्रसूतेः आयुरायुष्यमखंडं परिपूर्णं वाच्यम्। तदन्याभिस्तद्विपरीताभिः छिन्नभिन्नाभिः खंडमल्पमायुर्वाच्यम्। तासु रेखासु या या रेखा अच्छिन्नाभिन्ना तदपत्यं पूर्णायुः या छिन्नभिन्ना तदल्पायुरित्यर्थः ॥ १९ ॥

एका तिर्यक्तर्जनीं याति रेखा तर्ज-
न्यंगुष्ठांतराले तदन्या॥ ते द्वे स्याता-
मायुरैश्वर्यरेखे तत्सौंदर्ये सुंदरत्वं
तयोः स्यात् ॥ २० ॥

शालिनी। एका रेखा तर्जनीं प्रदेशिनीं प्रति तिर्यग्याति तदन्या रेखा तर्जन्यंगुष्ठयोरंतराले स्थिता द्वे क्रमेण आयुरैश्वर्यरेखे स्याताम्। प्रथमा आयुष्यरेखा

द्वितीया ऐश्वर्यरेखेत्यर्थः । तयो रेखयोः सौंदर्ये सति अरूक्षगंभीरेति वक्ष्यमाणसौंदर्ये सति तयोः आयुरैश्वर्यरेखयोः सुंदरत्वं चारुत्वं स्यात् ॥ २० ॥

ऐश्वर्यरेखाशिखरेण मूलाद्युनक्ति या सा पितृवंशरेखा ॥ नीरंध्रबंधा गृहबंधनाय बंहीयसी वंशविवर्धनाय॥२१॥

उपजातिः। या रेखा मूलात्पाणिमूलान्निर्गता सत्यैश्वर्यरेखायाः शिखरमग्रं तेन सार्द्धं युनक्ति योगं प्राप्नोति सा पितृवंशरेखा भवति । तादृशः पितृवंशो ज्ञेय इत्यर्थः । सा रेखा नीरंध्रबंधा निश्छिद्रा बंधरहिता च गृहबंधनाय भवति । गृहं गृहिणी तस्या बंधनमतिप्रीतिः सा च रेखा बंहीयसी अतिशयेन बहुला बंहीयसी वंशविवर्धनाय भवति । 'प्रियस्थिर ' इत्यादिना बहुलस्य बंहादेशः ॥ २१ ॥

कनिष्ठिकाजीवितरेखयोः स्यान्मध्ये मिथः कांतकलत्ररेखा ॥ अपत्यरीत्याकरभे परस्मिन्भवंति सांमातुरवर्गरेखाः ॥ २२ ॥

उपजातिः।जीवितरेखा आयुष्यरेखा कनिष्ठिकाजीवितयोर्मध्ये करभप्रदेशे स्थिताः मिथःपरस्परं कांतकल

त्रेखाः स्युः।पुरुषहस्ते तावत्यस्तस्य भार्याः स्त्रीहस्ते तावंतस्तस्याः कांता इत्यर्थः।'मणिबंधादाकनिष्ठं करस्य करभो बहिः ' इत्यमरः।परे उर्वरिते अस्मिन्करभे स्थिताः सांमातुरवर्गस्य रेखाः अपत्यरीत्या ज्ञेयाः संमातुरपत्यानि सांमातुराः सोदराः ' मातुरुत्संख्यासंभद्रपूर्वायाः'इत्यण् । उच्चपथांगुष्ठतलपुत्राः कन्याश्च लक्षितास्तेषामायुष्यं तद्वदस्मिन् जीवितरेखाया अधःस्थिते करभे भ्रातरो भगिन्यश्च तेषामायुश्च लक्षणीयमिति भावः ॥ २२ ॥

अनामिकामूलविभूषणं या पुण्यस्य
रेखा तदवाप्तिहेतुः ॥ निःसीमसीमं-
तितपंचशाखा करोर्ध्वरेखा नकरो-
ति राज्यम् ॥ २३ ॥

अनामिकाया मूलं तस्य विभूषणमेव विभूषणं या रेखा नित्यनपुंसकत्वात्स्त्रीविशेषणत्वेपि क्लीबत्वं।अनामिकामूले ऊर्ध्वस्थितेत्यर्थः। सा रेखा पुण्यस्य रेखा कथंभूता तदवाप्तिहेतुः तस्य पुण्यस्य अवाप्तिः प्राप्तिः तस्य हेतुः। नित्यपुँल्लिंगत्वात्स्त्रीविशेषणेपि पुँल्लिंगत्वं । तस्यां सत्यां पुण्यप्राप्तिरस्तीत्यर्थः । निर्गता सीमा यस्यासौ निःसीमः सीमंतितः पंचशाखो यस्मिन्निति सीमंतिताः पंचशाखा यस्यासौ पंचशाखः पाणिः निः

सीमः सीमंतितः पंचशाखो यया सा तथा सा ऊर्ध्व-रेखा कस्य राज्यं नकरोति अपि तु सर्वस्यापि राज्यं करोतीत्यर्थः। 'पंचशाखः शयः पाणिः' इत्यमरः। ययोर्ध्वरेखया द्विधाकृतमिव पाणितलं भवति सावश्यं राज्यप्रदेत्यर्थः ॥ २३ ॥

अरूक्षगंभीरमनोहराभीरेखाभिरंत-र्मधुपिंगलाभिः॥न चातिबह्वीभिरवा मवामेष्वंगेषु पुंस्त्रीफलयोः स्फुटत्वम् २४

इत्यादीनां सर्वासामपि शुभानां रेखासाधारण्येन अतिशयितत्वमाह विपरीताख्यानकी। अरूक्षाः स्निग्धाः गंभीरा निम्ना मनोहराः सुंदराः अंतः अभ्यंतरे मधुवत्पिंगलाः न च अतिबह्व्यः न अतिसंकीर्णाः एतादृशीभिरुक्ताभी रेखाभिः पुंस्त्रीफलयोः स्फुटत्वं शुभफलाधिक्यं स्यात्। केषु अवामवामेषु अंगेषु पुरुषस्य दक्षिणहस्तचरणादिषु स्त्रिया वामेष्वित्यर्थः २४॥

सरोजश्रीवृक्षध्वजगजतिमिस्तंभ-कलशस्त्रगादर्शच्छत्रांकुशकुलिशभृंगा रगिरिभिः॥रथाश्वश्रीवत्सव्यजनय-वयूपप्रभृतिभिर्नरा नार्यो राज्यं द-धति पदपाणिप्रणयिभिः ॥ २५ ॥

अथ करेचरणे वा राज्यचिह्नान्याह शिखारिणी । सरोजं कमलं श्रीवृक्षो बिल्ववृक्षः ध्वजः केतुर्गजो हस्ती तिमिर्मत्स्यः स्तंभकलशौ प्रसिद्धौ स्रक् माला आदर्शो मुकुरः छत्रमातपत्रम् अंकुशः प्रसिद्धः कुलिशं वज्रं भृंगारः करकः गिरिः पर्वतः रथः प्रसिद्धः अश्वस्तुरगः श्रीवत्सो विष्णुवक्षसि रोम्णां प्रदक्षिणावर्त्तः तदुपचारात्प्रदक्षिणावर्तमात्रं गृह्यते । व्यजनं तालं यवो धान्यविशेषः यूपो यज्ञस्तंभः प्रभृतिभिरित्यादिभिश्चिह्नैः पदपाणिप्रणयिभिः चरणगतैः पाणिगतैर्वा नराः पुरुषाः नार्यः स्त्रियः राज्यं दधति धारयंति एभिर्लक्षणै राज्यप्राप्तिरित्यर्थः ॥ २५ ॥



अर्चितं वचनमुन्नतं मनोनिर्विशेषसुखदं वपुर्दृशाम् ॥ अस्ति चेदघपराङ्मुखा मतिर्लक्षणैः किमपरैर्नृयोषिताम् ॥२६॥

अथ मुख्यलक्षणान्याह।रथोद्धतम्।यदि वचनं भाषणमर्चितं पूजितं स्यात् । मनोहरमित्यर्थः । मनः मानसं उन्नतं पृथुलं नाल्पविषये मनःप्रवृत्तिरित्यर्थः । वपुः शरीरं दृशां नेत्राणां निर्विशेषसुखदं निर्विशेषमधिकं सुखं तत्प्रददातीत्यर्थः । मतिर्बुद्धिः अघपराङ्मुखा पातकात्परावृत्ता तदा नृयोषितां पुरु-

षाणां स्त्रीणां वा परैर्लक्षणैः किम् । एषु चतुर्षु लक्षणेषु सत्सु अन्येषां शुभलक्षणानां किमपि न प्रयोजनमिति भावः। इति सामुद्रिकलक्षणानि ॥२६॥

वरस्य कन्यावरणेवरेण्यो दुर्गेवयोद-
क्षिणचेष्टितश्च।अदक्षिणं चेष्टितमिष्ट-
माहुस्तयोः कुमारी वृणुयाद्वरं चेत्॥२७॥

अथ निमित्तानि। तत्र वरणकाले पक्षिचेष्टितमाह। उपजातिः। वरस्य कन्यावरणसमये यदा वरः कन्यां वरीतुमिच्छति तस्मिन्काले यः कश्चन पुँलिंगः पक्षी दक्षिणचेष्टितः दक्षिणांगे कंडूयन् कंपनादिभिश्चेष्टितो भवति स वरेण्यः अतिशुभः स्यात् । का इव दुर्गा इव । दुर्गा कृष्णचीटिका। स्त्रीलिंगपक्षिषु मध्ये दुर्गापि दक्षिणचेष्टिता शुभेत्यर्थः। अर्थादनयोर्वामचेष्टितमशुभमिति । कुमारी नरं चेद्वृणुयात्तस्मिन्काले तयोः पुँल्लिंगपक्षिदुर्गयोः अदक्षिणं वामांगचेष्टितमिष्टं शुभमाहुः ॥ २७ ॥

शुनोगतिर्दक्षिणेष्टा कुमारी यत्र कां-
क्षिणी ॥अदक्षिणा यत्र तत्र वर एतां
वुवूर्षति ॥ २८॥

अथ शुनश्चेष्टितमाह। अनुष्टुप् । यत्र कुमारी कां-

क्षिणी वरं वरीतुच्मिछति तत्र शुनः शुनकस्य दक्षिणां स्वकीयदक्षिणभागे गतिरिष्टा शुभा। यत्र वरः एतां कुमारीं वुवूर्षति वरीतुमिच्छति तत्र शुनो गतिरदक्षिणा स्वस्य वामभागे चेत्तदा शुभा ॥ २८ ॥

आरोप्याक्षतपूरिते गणपतिं प्रस्था
दिपात्रे शनैः संमार्जन्यववेष्टिते युव-
तयस्तिस्रः सकन्या निशि ॥ निर्याता
रजकादिवेश्मसु करे कृत्वा तमभ्य-
र्चितं यां वाचं शृणुयुस्तदर्थसदृशी
सिद्धिः किलोपश्रुतौ ॥ २९ ॥



अथोपश्रुतिशकुनमाह। शार्दूलविक्रीडितम्। अक्षतैस्तंदुलैः परिपूरिते प्रस्थादिपात्रे प्रस्थकुटपादीनां मानपात्रे संमार्जन्या अववेष्टिते आछादिते गणेशप्रतिमामारोप्य प्रक्षिप्य सकन्याः एकया कुमार्या सहितास्तिस्रो युवतयः सुवासिन्यः निशि रात्रौ रजकादीनां वस्त्रनिर्णेजकमद्यकारादीनां वेश्मसु गृहसमीपे शनैर्निर्याताः। किंकृत्वा एवंविधगणपतिं गंधपुष्पादिभिरर्चितं पूजितं करे हस्ते कृत्वा तस्मिन् गृहे स्थितानां मनुजानां यां वाचं यद्वचनं शृणुयुः आकर्णयेयुः। तस्यार्थः अभिप्रायः तेन सदृशी सिद्धिः

चिंतितकार्यस्य सिद्धिर्ज्ञेया । किलेति निश्चये। अत्राधिवासनमंत्रादिकं विधानमालाद्युक्तं ज्ञेयम् । ॥२९॥

श्रुतित्रिपूर्वावसुवन्हिमित्रविश्वानि
लक्षे वरणं कुमार्याः ॥ तच्चावमन्येत
न चेतसापि यदा चरेयुः स्वकुलो
क्तमार्याः ॥ ३० ॥

इत्यादिलक्षणैःपरीक्षितां कन्यां वरो वरयेत्कन्यापिवरमित्युक्तम्।तत्रकन्यावरणनक्षत्राणिकुलधर्मानतिक्रमणं चाह उपजातिः।श्रुतिःश्रवणः त्रिपूर्वाः पूर्वात्रितयं वसवो धनिष्ठा वह्निः कृत्तिका मित्रोनुराधा विश्वे उत्तराषाढा अनिलःस्वाती एषु नक्षत्रेषु कुमार्या वरणंस्यात्। अथ कुलधर्मः यत् आर्याः वृद्धतमाः स्वकुलोक्तं स्वकुलपरंपरागतमाचरेयुः । तच्चेतसापि नावमन्येत । तस्यावज्ञा मनसापि न कार्या । किं पुनः साक्षात् । अतस्ते कुलधर्मा अवश्यं कर्तव्या इत्यर्थः।तत्राप्यागमविरुद्धाः न कार्याः । 'देशाचाराः कुलाचारा ये तु विध्यविरोधिनः' इति स्मरणात् ॥ ३० ॥

वेदिकां विरचयेद्यथा तथा स्यांदि
यं प्रविशतश्च दक्षिणे ॥ स्फूर्जना
श्रयथवोप्तिवार्णिकाः षण्नवत्रिदिवसे
षु नाग्रतः ॥ ३१॥

अथ वेदिकानिर्माणं तत्प्रभृतीनां कालं चाह। रथोद्धता। वेदिकां तथा रचयेत् ।तथा कथं। यथा इयं वेदिका गृहं प्रविशतः पुरुषस्य दक्षिणे भागे भवति।तस्याः लक्षणभूषणादिकं नारदादिभिरुक्तं ज्ञेयं । इत्यादीनां विवाहकृत्यानामारंभकालमाह । स्युरिति । जनाश्रयो मंडपः 'मंडपोऽस्त्री जनाश्रय' इत्यमरः।यवोप्तिर्यववापः अंकुरार्पणमिति यावत् । तत्प्रकारः शौनकस्मृत्यादिषूक्तः ।वर्णिका लोकप्रसिद्धाः अपूपविशेषाः।यद्वा वर्णका रंगवल्ल्यादयः।एतदुपलक्षणेन दलनकंडनवारकादि गृह्यते।एतानि अग्रतः पूर्वं लग्नदिनमारभ्य षणवत्रिषु षष्ठतृतीयनवमेषु दिवसेषु न स्युः । पश्चादपि तदुद्वासनादिकं च ज्ञेयम्।केचित्तु नवमदिनं शुभमाहुः। देशाचारतो व्यवस्था ॥ ३१ ॥

कन्यकोक्तविधिवत्पुलोमजापूजनं
सयुवतिः समाचरेत् ॥ घ्नंति चाशुभ
मविघ्नमातरो मातृयज्ञकुलकर्मशां
तयः ॥ ३२ ॥

इति विवाहवृन्दावने मिश्राध्याय
श्चतुर्दशः ॥ १४ ॥

अथेंद्राणीपूजनादिकमाह। युवतिभिः सुवासिनीभिः

सहिता सयुवतिः कन्यका उक्तविधिवत् सुभगामथें-द्रपत्नीं घटकारमृदा सुलक्षणावयवामित्यादिना शौन-काद्युक्तविधिना पुलोम्नो जाता पुलोमजा इंद्राणी तस्याः पूजनं समाचरेत्।अथ मातृकादिपूजा। घ्नंतीति।मातरो द्विविधाः दैव्यो मानुष्यश्चेति।तत्र दैव्यो गौरीपद्मेत्या-दयो ब्राह्मीमाहेश्वरीत्यादयश्च । मानुष्यः मातृमाताम-ह्यादयश्चतुर्विंशतिमतोक्ताः तासां यज्ञः पूजादिकं कुलकर्मशांतयः कुलोक्ताचारवशतो याः शांतयः कुलदेवताराधनादयः ता अविघ्नमातरः तनुविस्तारे निर्विघ्नं निष्पादिताः अशुभं घ्नंति नाशयंति।चः समु-च्चये।पुलोमजापूजनं च अशुभं हंतीत्यर्थः।अतः शची-मातृकापूजादिकमवश्यं कर्तव्यमिति भावः ॥ ३२ ॥

इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्म-जगणेशविरचितायां विवाहवृंदावनटीकायां विवाहदी-पिकायां मिश्राध्यायश्चतुर्दशः ॥ १४ ॥

## अथ वधूवरप्रश्नाध्यायः ।

कर्मायसूनुसहजस्मरगोमृगांकः स्त्री
पुंससंगमयिता यदि जीवदृष्टः ।
स्वर्क्षाणि शुक्रशशिदृष्टियुतानि कन्या
लभ्यै वधूगृहदृकाणनवांशका वा ॥१॥

अथ वधूवरप्रश्नाध्याय आरभ्यते।तत्रादौ वधूप्रश्नमाह।वसंततिलका।अस्माकमस्याः कन्यायाः लाभो भविष्यति न वेत्यस्मिन् प्रश्नकाले यल्लग्नं तस्माल्लग्नादिकर्मायसूनुसहजस्मरगः दशमैकादशपंचमतृतीयसप्तमो मृगांकश्चंद्रो जीवेन गुरुणा दृष्टस्तदा स्त्रीपुंससंगमयिता स्यात्।स्त्रीपुंसेति अचतुरादित्वात्साधुः।तयोः संगमं समागमं करोतीति स्त्रीपुंससंगमयिता कन्यालाभं करोतीत्यर्थः। अयं योगः कन्याया वरलाभप्रश्नेपि। अविशेषात् योगांतरमाह।स्वक्षीणीति। शुक्रशशिभ्य दृष्टानि युतानि वा स्वक्षाणि लग्नं गतानि स्वराशयश्चंद्रशुक्रराशयः कर्कितुलावृषभाः कन्यालब्ध्यै कन्यालाभाय भवंति। योगांतरमाह।वधूगृहेति। वधूसंज्ञाः समराशयो वृषकर्कटादयस्तेषां गृहाणिं दृकाणा वा नवांशका वा लग्नगताः शुक्रशशिदृष्टयुताः कन्यालब्ध्यै भवंति ॥ १ ॥

युग्मर्क्षगौ शशिसितौ द्विपदांगनांशे स्यातां तदाप्तिपिशुनौ तनुमीक्षमाणौ ॥ नारी नवांशमुदितं खचराः परेपि स्त्रैणक्षगाविलसदुज्ज्वलवीर्यभाजः ॥ २ ॥

योगांतरमाह॥युग्मर्क्षगौ समराशिस्थितौ शशिसितौ द्विपदांगनांशे स्थितौ द्विपदश्चासावंगनांशश्च स च कन्यांश एव तत्र स्थितौ तनुं लग्नमीक्षमाणौ पश्यंतौ तदा तौ तदाप्तिपिशुनौ स्तः॥तस्याः कन्याया आप्तिस्तस्याःपिशुनौ सूचकौ कन्यालाभसूचकावित्यर्थः। अत्र बलिनाविति शौनकीये विशेषोस्ति। योगांतरमाह॥नारीति। उदितमुदयं प्राप्तं लग्नगतमित्यर्थः। उदितं नारीनवांशं स्त्रीनवांशं वृषकर्कादिकं शशिसितावीक्षमाणौ तदाप्तिपिशुनावित्यनुवृत्तिः। योगांतरमाह। खचरा इति। परेपि शुक्रशनैश्चरव्यतिरिक्ता अपि खचराःस्त्रैणर्क्षगाः समराशिस्थिताः स्त्रीणामिमानि स्त्रैणानि।'स्त्रीपुंसाभ्यां नञ्स्नञौ'इति नञ्। विलसंतः स्निग्धा उज्ज्वलाः प्रकाशमानाः वीर्यभाजःसबलाः उदितं नारीनवांशमीक्षमाणाः कन्याप्राप्तिसूचका इत्यनुवृत्तिः॥ २॥

एवं नरा नरदृकाणनवांशदृग्भिः पुंस्खेचरैरुपनमंति नितंबिनीनाम्॥यल्लिंगिबालकपशुप्रभृतींगितं स्यात्प्रश्नक्षणेतदुतथैव वधूवरस्य॥ ३॥

अथ कन्याया वरोपलब्धिप्रश्नमाह। एवमनेन स्वर्क्षाणि शुक्रशशीत्यादिविधिना नराः पुरुषा नितं-

विनीनां स्त्रीणामुपनमंति समागच्छंति । लब्धा भवंतीति यावत् । कैः नरदृकाणनवांशदृग्भिः पुंस्खेचरैः नरा विषमराशयो मेषमिथुनादयस्ते च ते दृकाणनवांशाश्च नरद्रेक्काणाः नरनवांशा इति तान्पश्यंति ते नरदृकाणनवांशदृशः तै पुंस्खेचरैः पुरुषग्रहैः रविभौमगुरुभिः । एतदुक्तं भवति । स्त्रीग्रहौ किल शशिसितौ यत्र शशिसितायुक्तौ तत्र पुंग्रहा ग्राह्याः यत्र स्त्रीदृकाणस्तत्र नरदृकाणः यत्र स्त्रीनवांशस्तत्र नरनवांशः यत्र स्त्रीराशिस्तत्र नरराशिरिति । एवमनेन विधिना उक्तयोगैरेव कन्याया वरोपलब्धिर्ज्ञेयेति। अथ निमित्तनि यल्लिंगीति । प्रश्नक्षणे प्रश्नकाले लिंगिनः कापालिकाः बालकाः प्रसिद्धाः पशवः छागवृषतुरगादयः।प्रभृतिग्रहणाद्भिक्षुकोन्मत्तादीनां ग्रहणम् तेषां यदिंगितं चेष्टितं तद्वधूवरस्य तथैव भवति । उरित्यव्ययं निश्चये। 'तिष्यपुनवस्वोर्नक्षत्रद्वंद्वे' इत्यत्र इतरेतरयोगद्वंद्वेप्येकत्वज्ञापकात्सर्वोपि द्वंद्वो विभाषया एकवत्स्यात्।अतो वधूवरस्येत्येकत्वम्॥३॥

प्रश्नोदयादमृतरोचिषिषण्मृतिस्थे
मूर्तौ च तत्र मदनस्पृशि चावनेये ॥
तन्वस्तयोरशुभसंगतयोर्वरस्यनाशः
क्रमाद्वसुमहीमुनिसंमितेब्दे ॥ ४ ॥

अथ वधूवरप्रश्नकाले शुभाशुभयोगानाह।प्रश्नकाले उदयः प्रश्नोदयः । प्रश्नोदयः प्रश्नलग्नं तस्मात्प्रश्नोदयादमृतरोचिषि चंद्रमसि षण्मृतिस्थे षष्ठे अष्टमस्थे वा सति अयमेकश्चंद्रकृतो योगः तत्र तस्मिन् चंद्रमसि मूर्तौ लग्नस्थे सति अवन्याः अपत्यमावनेयः भौमः ।' कृदिकारात् ' इति ङीषि कृते ' स्त्रीभ्योढक् ' तस्मिन्भौमे मदनस्पृशि सप्तमस्थे वसति।चः समुच्चये। अयं चंद्रभौमकृतोद्वितीयो योगः । तन्वस्तयोर्लग्नसप्तमयोः अशुभसंगतयोः पापग्रहयुक्तयोः सतोः अयं पापद्वयकृतस्तृतीयो योगः। एषु योगेषु क्रमाद्वसुमहीमुनिसंमितेऽब्दे वरस्य नाशः स्यात् प्रथमे योगे अष्टमे वर्षे द्वितीये एकवर्षे तृतीये सप्तमे वर्षे इत्यर्थः ॥ ४ ॥

जामित्रगौ विधुसितौ विधवामसा
ध्वीं सौरिः कुजोऽसुरमहेज्यबुधौ
धनाढ्यम्॥दीर्घायुषं वपुषि सुप्रसवां
प्रसूतौ स्त्रीजातकोक्तमखिलं खलु
चिंत्यमत्र ॥ ५ ॥

जामित्रगौ सप्तमस्थौ विधुसितौ चंद्रशुक्रौ वधूं विधवां कुरुतः । सौरिः शनिः कुजो भौमः जामित्रगः असाध्वीं दुराचारां करोति । शौनकीये तु शनिर्मृत-

प्रजां भौमो मरणयुक्तामिति।तथापि फलं दुष्टमेव।महांश्चासौ इज्यश्च महेज्यः असुराणां महेज्यः शुक्रः बुधः प्रसिद्धः तौ जामित्रगौ धनाढ्यां कुरुतः। वपुषि लग्ने स्थितौ दीर्घायुषं कुरुतः। प्रसूतौ पंचमे स्थितौ सुप्रसवां शुभसंततिं कुरुतः। कुत्रचित्सुरमहेज्येति पाठः। तदसत्। यदाह शौनकः 'यदि पृच्छकलग्नस्थौ भृगुसौम्यौ जीविनीं कुरुतः। पंचमसंस्थौ पुत्रान् जामित्रगतौ विपुलधनम्' इति। अस्मिन् वधूवरप्रश्नकाले स्त्रीजातकोक्तमखिलं शुभाशुभं चिंत्यम् ॥ ५ ॥

भतिथिवारफलानि पदेपदे विरचितानि परैरिति नोचिरे ॥ सकलकर्मसु यस्तदुपक्रमः स हि विवाहभ एव शुभे दिने ॥ ६ ॥

एवं कन्यावरोपलब्धिमुक्त्वा तल्लाभे सति दलनकंडनादिविवाहकृत्येषु शुभकालमाह–द्रुतविलंबितम्। दलनकंडनादिषु सकलकर्मसु भतिथिवारफलानि नक्षत्रादिफलानि परैरन्यैः पदेपदे विरचितानि।पदेपदे इति लौकिकाभिप्रायेणोक्तम्। अल्पकृत्येष्वपि पृथक्फलानि विशेषाभावेप्युक्तानीत्यर्थः।तानि पृथक्फलानीति कारणादस्माभिर्नोक्तानि। केचित्परोक्षाभावेपि भूतमात्रे लिटमिच्छंति। तथाच मुग्धबोधे

भवद्भूतभव्येषु क्याद्यस्त्रयस्त्रिशा इति । अतएव वराहादिप्रयोगाः 'होरां वराहमिहिरो रुचिरांचकार'इति । उदयनस्यापि'व्यातेने किरणावलीम्'इति।इतीति कथं। हि यस्मात्कारणात्तदुपक्रमस्तेषां सकलकर्मणां दलनकंड नादीनां य उपक्रमः आरंभः स विवाहभे विवाहनक्षत्रे एव शुभे दिने स्यात् शुभे व्यातिपाताविष्ट्यादिमहादोषरहिते षण्णवत्रिदिवसेषु नाग्रत इति निषिद्धादन्यदिने च । तथाच श्रीपतिः' त्रिवाहकृत्यं निखिलं विवाहभे विलोकयेन्नात्र बलं हिमद्युतेः॥ नच त्रिषष्ठोपि चवारकः शुभ' इति ॥ ६ ॥

प्रायो विवाहपटलं तटलंबमानस्तं-
बापम न सहते नयचालनानि॥ वृंदा-
वने परमतातपपीड्यमानवृंदावनेनु
रमतामिह सन्मतिश्रीः॥ ७॥

इति विवाहवृंदावनेवधूवरप्रश्नाध्यायः पंचदशः ॥ १५ ॥

अथ निजकृतस्यास्य विवाहपटलस्य पूर्वेभ्यो वैशिष्ट्यमाह-वसंततिलका।प्रायो बाहुल्येन विवाहपटलंविवाहफलसमूहः नयेन तर्केण चालनानि न सहते हेत्वादिना चालयितुं न शक्यते।आगमासिद्धत्वादिति भावः।

अत्र विशेषणद्वारेण दृष्टांतः। तटेति।तटे नदीतटे लंबमानः प्रशिथिलमूलोयः स्तंबस्तृणस्तंबः तेनोपमीयते तत्तथा। यथा तटस्थो लंबमानस्तृणस्तंबो न चालनं सहते चारिते त्वधःपतनमेव । तद्वद्विवाहपटलमपीत्यर्थः।अत इह मयोक्तं वृंदावने नाम्नि विवाहपटले सन्मतिश्रीः सतां विदुषां मतिः बुद्धिस्तस्याः श्रीःसंपद्रमतां सुखेन क्रीडतां।अत्र हेतुः।कथंभूते परमतेति। परेषां मतानि तदेवातप उष्णं तेन पीड्यमानास्तेषां वृंदं तद्वत् प्रीणयतीति तथा। अयं भावः। यथा कश्चन आतपे पीड्यमानो वने गत्वा सुखेन रमते तद्वत्परमतैः पीड्यमानोऽस्मिन् वृंदावने सुखेन रमतामिति। अथांते श्रीप्रयोगः समाप्त्यलंकारे यथात्र ग्रंथारम्भे॥ ७॥

इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशविरचितायां विवाहवृंदावनटीकायां वधूवरप्रश्नाध्यायः पंचदशः ॥ १५ ॥

## अथ विवाहवृंदावने स्ववंशवर्णनम् ।

अभूद्भरद्वाजमहर्षिवंशे विश्वावतंसे
श्रुतितत्ववेदी॥औदीच्यचारित्रपथप्र
वर्ती जनार्दनो याज्ञिकचक्रवर्ती॥१॥

अथ स्ववंशवर्णनपूर्वकं ग्रंथालंकारमाह।उपजातिः। भरद्वाजश्चासौ महर्षिश्च तस्य वंशे भरद्वाजगोत्रे वि-

श्वावतंसे अवतंसः कर्णपूरः विश्वस्य अवतंस इवावतंसः तस्मिन् विश्ववंद्य इत्यर्थः । जनार्दनो नामाभूत् । कथंभूतः।श्रुतीति श्रुतीनां वेदानां तत्त्वं याथार्थ्यं तद्वेत्तीति तथा। औदीच्याः औदीच्यजातीयजनाः तस्मिन् देशे ज्ञातयोनेकविधाः प्रसिद्धाः तेषां चारित्रं प्रचारस्तस्य पंथाः मार्गस्तं प्रवर्तयतीति तथा। औदीच्याचारमार्गप्रवर्तक इत्यर्थः। अनेन स्वधर्मोपासक इति सूचितम् । याज्ञिकेषु चक्रवर्तीव चक्रवर्ती श्रेष्ठतम इत्यर्थः ॥ १ ॥

अस्ति श्रियादित्य इति स्म तस्य
सूनुः श्रियादित्य इति द्वितीयः॥त्रि-
स्कंधपारंगतरंगमल्लस्तदात्मजो रा
णगइत्युदीर्ये ॥ २ ॥

तस्य जनार्दनस्य द्वितीयः सूनुः श्रियादित्य इत्यास्ति स्म आसीत् । इति सूर्यनामेत्याह क इव श्रिया दीप्त्या आदित्य इव तस्य श्रियादित्यस्य आत्मजः उदीर्ये राणगत इत्यासीत्।उदीर्यते तदुदीर्यं कथनीयं तस्मिन्नाम्नीति यावत् राणगनामेत्यर्थः । कथंभूतः त्रिस्कंधेति । त्रिस्कंधाः होरागणितसंहिताख्याः तेषां पारंगता अशेषज्ञातारः तेषां रंगे युद्धभूमौ म-

ल्ल इव मल्लः। मल्लो बाहुयुद्धकुशलः। त्रिस्कंधज्योतिःशास्त्रविदां पराभवकृदित्यर्थः ॥ २ ॥

श्रीकेशवः सुकविरध्ययनाध्वनीन
व्यूहान्प्रतर्पयितुमर्थपयःप्रवाहैः ॥
दैवज्ञराणगसुतः सुतपःश्रयेस्मि
न्वृंदावने मुनिगवीनिवहं दुदोह ॥ ३॥

वसंततिलका । अस्य दैवज्ञस्य राणगस्य सुतः श्रीकेशवः सुकविः शोभनकविरस्मिन्वृंदावने सुतपःश्रये मुनिगवीनिवहं दुदोह । मुनयो गाव इव मुनिगव्यः 'उपमितं व्याघ्रे' ति तत्पुरुषः 'गोरतद्धितलुकि ' इति टच् टित्त्वात् ङीप् । तासां निवहः समूहस्तं दुदोह दुग्धवान् । किमर्थम् अध्ययनाध्वनीनव्यूहान् अर्थपयःप्रवाहैः प्रतर्पयितुम् अध्ययनस्य अध्वा अध्ययनाध्वा तमलंगामिन इत्यध्ययनाध्वनीनाः अध्ययनमार्गज्ञानशीलाः 'अध्वनो यत्खौ' इति खः। अलंगामीत्यर्थः। 'आत्माध्वानौखे' इति अनः प्रकृतित्वम् । तेषां व्यूहाः समूहाः तान् अर्थपयइव अर्थपयः तस्य प्रवाहा ओघाः तैः सुष्ठु तपो येषां ते सुतपसः सुपुण्याः तैः श्रीयते सेव्यते तत्तथा। अत्रायं श्लेषः। सुतपोभिः सेव्यमाने वने अध्वगमनेन खिन्नान्पयःप्रवाहैस्तर्पयितुं गावो दुह्यंते त-

द्वत्सुपुण्यैः सेव्यमानेस्मिन्वृंदावननाम्नि ग्रंथे अन्यग्रंथाध्ययनेन खिन्नानर्थप्रवाहैस्तर्पयितुं मुनयो मया दुग्धा इति । तद्वचनेभ्यः सारं संगृहीतामित्यर्थः ॥ ३ ॥

अबहुदृष्टिधियः कियदप्यदः पदग भीरमधीरभिरंस्यते ॥ विशदशास्त्रधियां त्विदमेकदा श्रुतिगतं रसनासु विवृत्स्यति ॥ ४ ॥

अत एतत्सुज्ञेभ्य एव रोचायिष्यति कथमज्ञेभ्य इत्याशंकायामाह द्रुतविलंबितम्। न बहु दृष्टं यया सा अबहुदृष्टा साधीर्यस्यासौ अबहुदृष्टधीः तस्य अल्पदृष्टशास्त्रस्य अदः एतदपि कियत् किंपरिमाणमस्येति कियत् विशिष्टगुणमप्येतत्तस्य न किंचिदिति भावः।अधीरबुद्धिः अभिरंस्यते अभिरामं प्राप्स्यति । अत्र विशेषणद्वारा हेतुः। पदेति। पदैः गभीरं गंभीरपदमातिमंदबुद्धिस्तु अर्थं जानातु न वा पदगंभीरत्वादेवाह्लादयिष्यतीत्यर्थः। विशदशास्त्रधियां तु विशेषेण विशदा अत्यधिका शास्त्रे धीर्येषां ते तथा। तेषां तु इदमेकवारमेव श्रुतिगतं कर्णप्राप्तं सत् रसनासु जिव्हा विवृत्स्यते विवृद्धिं प्राप्स्यति। गौप्यं रसनागतं सद्यस्य कस्य कस्यापि नोच्यते इदं कर्णपथे गतं सत् रसनासु विवृत्स्यत इति रुच्यतिशयोक्तिः । उक्तंहि

भर्तृहरिणा—'अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः । ज्ञानलवदुर्विदग्धं ब्रह्मापि तं नरं न रंजयति ' ॥ इति ॥ ४ ॥ इति ग्रंथालंकारः ।

अत्र ग्रंथकृदुक्तयुक्तिममलां व्याख्याय सम्यक्ततस्तत्कुत्रापि महद्विरोधि कुहचिद्व्यर्थं वृथैवोज्झितम्। सद्युक्त्यातु निरस्य सारमुदितं तत्क्षम्यतां सज्जनास्तद्विश्वासवतां प्रतीतिरिह न स्यात्तं निरासं विना ॥१॥ पश्चात्सागरपूर्ववर्त्तितटगे ग्रामेत्र नंद्याभिधे रंभापूगरसालशीर्षनिचुलच्छायावितानेवसत् । नानाशास्त्रकलाकलापचतुरःश्रीकेशवोस्यात्मजष्टीकां युक्तिमतीं गणेशविबुधो वृंदावनस्याकरोत्॥२॥रसनगमनु १४७६ तुल्ये शाक आनंदवर्षे विवृतिमकृत शस्तां दीपिकाख्यां गणेशः॥ यदिह लिखितमल्पानल्पकं वा सदोषं तदतिविमलधीभिः शोध्यमित्यर्थये तान् ॥ ३ ॥

इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशदैवज्ञविरचितायां विवाहवृंदावनटीकायां विवाहदीपिकाख्यायां स्ववंशवर्णने षोडशोध्यायः ॥ १६ ॥

---

ध्रुवानुराधामृगमूलरेवतीकरंमघा: स्वातिरदूषणोगणः॥ रवेरमीनामकरादिषड्गृहीकरग्रहेमंगलकृन्मृगीदृशां

विवाहोपपदं वृंदावनं व्याख्याय कैशवम् ॥
तत्कृतां लग्नशुद्धिं च गणेशो व्याचिकीर्षति ॥ १ ॥
तत्रादौविहितनक्षत्रादिकमाह॥ध्रुवादिः करांतोयमेकादशनक्षत्रात्मको गणश्चेदद्दूषणः वक्ष्यमाणपादवेधादिदोषरहितस्तदा मृगीदृशां स्त्रीणां करग्रहे मंगलकृत्स्यात् ॥ १ ॥

क्रूरोज्झितं द्विः शशिभोगतोर्वाक्-
दाप्यमाद्यं च शुभं न भं स्यात् ॥
त्र्यष्टार्कविंशं च कुजार्किभानुस्वर्भा-
नुतः सत्रिविधाद्भुतं च ॥ २ ॥

अथ श्लोकत्रयेण नक्षत्रशुद्धिमाह । क्रूरेण पापग्रहेण उज्झितं त्यक्तं भं नक्षत्रं न शुभं स्यात् । तदाप्यंते न क्रूरग्रहेण आप्यं प्राप्यं भोग्यमाद्यं युक्तं च । अथ लत्ता । त्र्यष्टेति । कुजो भौमः आर्किः शनिः भानू रविः स्वर्भानू राहुः तेभ्यः सकाशात्क्रमेण त्र्यष्टार्कविंशं तृतीयमष्टमं द्वादशं विंशं च सत्रिविधाद्भुतं त्रिविधैर्दिव्यभौमांतरिक्षैरद्भुतैरुत्पातैः सहितं च द्विःशशिभोगतोर्वाक् न शुभं स्यादिति प्रत्येकं संबध्यते। द्विवारं द्विः एभिर्दोषैस्त्वत्रापि नक्षत्रं द्विधा चंद्रभोगादर्वाक् न शुभं॥द्वितीये चंद्रभोगे शुभदं भवतीत्यर्थः। न शुभमित्यग्रेप्यनुवर्तनीयम् ॥ २ ॥

वैसाहगंशुव्यसमाप्तिसाग्रं संक्रांति साम्यं खलवेधवच्च ॥ स्वाशश्रमो भान्वभिरोपुनर्मूखरेमृहाणां त्रिभि रुत्तरैः स्यात् ॥ ३ ॥

अथ चंडायुधादि वै वैधृतः सा साध्यः ह हर्षणः गं गंडः शूशूलः व्य व्यतीपातः तेषां समाप्तिरवसानं तत्र साम्यं सशेषं यत् येषां योगानामंते वर्तमानमित्यर्थः। यच्च संक्रांतिसाम्यं चंद्रार्कयोस्तेन सहितं यस्मिन्नक्षत्रे महापात इत्यर्थः। यच्च खलवेधवत् पापग्रहवेधयुक्तं तमेव वेधमाह।स्वाशेति । सवेधः स्वाशाद्यैराद्यक्षरैरुपलक्षितनक्षत्राणां क्रमेण द्वयोर्मिथः स्यात्।सयथा स्वा स्वाती श शततारका अनयोर्मिथो वेधः। स्वातिस्थेन ग्रहेण शततारका विद्धा शततारकास्थेन स्वातीति।एवमुत्तरत्रापि।श्र श्रवणः मःमघा अनयोर्मिथो वेधः। भभरणी अनु अनुराधा अनयोर्मिथो वेधः।अभि अभिजित् रो रोहिणी अनयोर्मिथो वेधः। पुनः पुनर्वसुः मूः मूलम् अनयोर्मिथो वेधः। रेमृहाणां वेधः क्रमेण त्रिभैरुत्तरैः स्यात् रेवत्युत्तरफल्गुन्योः मृगोत्तराषाढयोः हस्तोत्तराभाद्रपदयोरित्यर्थः ॥ ३ ॥

एकार्गलः साभिजितींदुतोर्कः समे

स्ति योगेष्वशुभाह्वयेषु॥चतुर्दशं चें
दुभमर्कधिष्ण्यादितीयमुक्तोद्वहनर्क्ष
शुद्धिः ॥ ४ ॥

अत्रैकार्गलादिकमाह । अशुभाह्वयेषु दुष्टनामसु योगेषु सत्सु इंदुतः इंदुनक्षत्रात् अर्कः सूर्यः साभिजिति समे ऋक्षे भवति तदा एकार्गलोऽस्ति।एतदुक्तं भवति । 'व्याघातशूलपरिघव्यतिपातविष्कंभगंडातिगंडवज्रवैधृता अशुभनामयोगाः' एष्वन्यतमे योगे सति चंद्रनक्षत्रमारभ्य अभिजिता सह अर्कनक्षत्रं गणयित्वा यदि युग्मा संख्या भवति तदैकार्गलः स्यात् । तद्धं न शुभमित्यनुवृत्तिः । अथ संध्योदितमर्कधिष्ण्याच्चतुर्दशमिंदुभं चंद्रनक्षत्रं च अशुद्धमशुभं स्यात् । इतीयमुद्वहनर्क्षस्य विवाहनक्षत्रस्य शुद्धिरुक्ता ॥ ४ ॥

षट्त्र्यायेष्वशुभाः शुभाय निधनद्यूनांत्यवर्ज्यं परे त्र्यायार्थेषु शशीमृतौ शनितमःसूर्याः परे भंगदाः॥ क्रूरद्यूनवृतान्विते शशितनू अस्ते सितुज्ञौ विधुर्लग्ने सोमासिताधिपा द्विषि सितः सेंदुर्विनष्टांशपः ॥ ५ ॥

अथ लग्नशुद्धिमाह । षट् षष्ठं त्रयस्तृतीयम् ।

आय एकादशम्।एष्वशुभाः पापग्रहाः शुभाय भवंति। शेषेष्वशुभाय। निधनमष्टमं द्यूनं सप्तमम्। अंत्यं द्वादशम् एतानि वर्जयित्वा अन्येषु नवसु स्थानेषु परे सौम्यग्रहा बुधगुरुशुक्राः शुभाय स्युः ॥ शेषेषु निधनद्यूनांत्येष्वशुभाय। शशी चंद्रस्त्र्यायार्थेषु तृतीयैकादशद्वितीयेषु शुभाय भवेत् शेषेष्वशुभाय। तत्राष्टमे सर्वेषां विशेषमाह मृताविति। मृतावष्टमे शनितमःसूर्याः शुभाय स्युः। नत्वशुभाय।अत्र राहुग्रहणात्तत्स्वरूपांतरं केतुश्च। परेन्ये चंद्रभौमबुधगुरुशुक्राः मृतौ स्थिता भंगदाः लग्नभंगाय स्युः ॥अन्यानपि लग्नभंगानाह।क्रूरद्यूनेति। शशितनूक्रूरद्यूनवृतान्विते भंगाय भवतः। द्यूनं वृतमावृतं ययोस्ते द्यूनवृते ते च ते अन्विते च द्यूनवृतान्विते क्रमेण द्यूनवृतान्विते ते तथा लग्नस्य चंद्रस्य वा सप्तमं क्रूरान्वितं भवेत्। यद्वा चंद्रो लग्नं वा क्रूरान्वितं भवेत्तदा लग्नभंगः स्यादित्यर्थः। अस्ते सप्तमे लग्नाच्चंद्राद्वा सितज्ञौ शुक्रो बुधो वा सोपि भंगाय।लग्ने विधुश्चंद्रो भंगाय।द्विषि षष्ठे सोमसिताधिपाः भंगाय स्युः। सोमश्चंद्रः सितः शुक्रः अधिपाः स्वामिनः लग्नांशद्रेष्काणानाम्।अत्र षष्ठं लग्नादेव न चंद्रात् सोमग्रहणात्। सितः शुक्रः सेंदुः सचंद्रः भंगाय शुक्रयुक्तश्चंद्र इति भावः। अंशपो नवांशाधीशो विनष्टास्तंगतः भंगाय स्यात् ॥ ९ ॥

अंशाः षड्त्रिनवाद्रयस्तदधिपे लग्नां शयोर्द्वादशद्वित्र्यष्टासु न लग्नमस्त लवपे तत्सप्तमाभ्यां तथा ॥ गंडांतेषु च वैधृताबुभयतः संक्रांतियामद्वये यामार्धव्यतिपातविष्टिकुलके मासे न्हिचोनाधिके ॥ ६ ॥

अथ नवांशशुद्ध्यादिकमाह। अंशा लग्ननवांशाः षट्त्रिनवाद्रयः कन्यामिथुनधनुस्तुलाः शुभाः। तस्य नवांशस्याधिपे स्वामिनि लग्ननवांशयोः लग्नान्नवांशाद्वा द्वादशद्वित्र्यष्टासु द्वादशद्वितीयतृतीयाष्टमेषु स्थिते सति न लग्नं कार्यम्। अस्तलवपे अस्तांशाधिपे तत्सप्तमाभ्यां लग्नादंशाच्च सप्तमाभ्यां सकाशात्तथा तद्वद्द्वादशद्वित्र्यष्टासु स्थिते सति लग्नं न कार्यम्। एषु स्थानेषु तस्य दृष्टिर्नास्तीत्यभिप्रायः। अथान्ये महादोषाः गंडांतेष्विति। त्रिविधेषु गंडांतेषु शूलवैधृतवरीयसामित्युक्तेषु वैधृतौ सप्तविंशयोगे च संक्रांतेः सकाशादुभयतः पूर्वं पश्चाच्च यामद्वये षोडशघटीषु च यामार्धमर्धयामः शास्त्रांतरोक्तः। व्यतिपातः सप्तदशो योगः। विष्टिभद्रा सप्तमं करणं कुलिकः द्विघ्नूनामनव इत्यादिनोक्तः तस्मिन् ऊनाधिके मासि क्षयमासेऽधिमासे

चेति ऊनाधिकेह्नि दिनक्षये दिनवृद्धौ चेति न लग्नं कार्यमिति प्रत्येकं संबंधः ॥ ६ ॥

जन्मर्क्षाज्जन्मलग्नान्निधनविधनते अष्टमद्वादशाभ्यां लग्ने तत्स्वामितत्स्थैरपि वपुषि खगैस्तद्गृहांशैश्च ते स्तः॥ अस्तेशारैर्नवांशे व्यसनमसुभयं नाडिवेधे षडष्टक्षेत्रेशानामसख्ये दनुजनरगणेवार्कजीवेंदुशुद्धौ ॥ ७ ॥

अथाष्टमलग्नादिदोषानाह। जन्मर्क्षाज्जन्मलग्नाच्च अष्टमद्वादशाभ्यां लग्ने स्थिताभ्यां क्रमेण निधनविधनते स्तः। जन्मराशेर्जन्मलग्नाद्वाष्टमे राशौ लग्नगते सति निधनं द्वादशे विधनं स्यादित्यर्थः । तत्स्वामितत्स्थैरष्टमद्वादशराश्योः स्वामिनौ तत्स्वामिनौ तयोरष्टमद्वादशराश्योः स्थितास्तत्स्थास्तैः स्वगैरपि वपुषि लग्ने स्थितैः क्रमेण निधनविधने स्तः।अष्टमस्थानाधीशेष्टमस्थे वा ग्रहैर्लग्नगते सति निधनं द्वादशस्थानाधीशे द्वादशस्थे वा ग्रहे लग्नगते सति विधनता स्यादित्यर्थः। तद्गृहांशैः तेषां ग्रहाणां यानि गृहाणि तेषामंशा नवांशास्तैश्च वपुषि गतैः ते निधनविधनते क्रमेण स्तः । अष्टमराशेरष्टमस्थग्रहस्य राशेर्वा नवांशे लग्नगते सति निधनं द्वादशराशेर्द्वादशस्थग्रह-

स्य राशेर्वा नवांशे लग्नगते विधनता स्यादित्यर्थः । अस्तेशारेः अंशादस्तं सप्तमं तस्येशः स्वामी तस्यारिः शत्रुस्तस्य नवांशे लग्नगते सति व्यसनं स्यात् । अथ मेलकः । असुभयमिति । रुद्रार्यमे इत्यादिना नारीनरनक्षत्रयोर्नाडीवेधे सति असुभयं मरणं स्यात् । षडष्टक्षेत्रेशानां स्त्रीनरराश्योर्मिथः षडष्टकराश्यधिपानामसख्ये वैरे सति असुभयं स्यात् । त्रियुग्मीत्यादिना दनुजनरगणे राक्षसमनुष्यगणे च असुभयं स्यात् । अर्कजीवेंदुशुद्धौ च गोचरमार्गेण दंपत्योः सूर्यगुरुचंद्राणां बलालाभे सति मरणं स्यादित्यर्थः ॥७॥

वेदा इभाब्धय इयं किल नार्मदीभा
तद्व्यंगुलं ह्रसति पुष्यति योजनेन ॥
याम्योत्तरे पथि हतादशनागदिग्भि
रंत्यापुनर्दहनहृच्चरखंडकानि ॥ ८ ॥

एवं लग्नांशशुद्धिं ज्ञात्वा तस्मात्कालज्ञानार्थं पलभाचरोदयादीनाह । वेदाश्चत्वार्यंगुलानि इभाब्धयोष्टचत्वारिंशद्व्यंगुलानि इयं किल सर्वत्र नर्मदातीरे पलभा स्यात् । तस्माद्याम्योत्तरे पथि एकयोजनेन व्यंगुलं तस्याः पलभायाः ह्रसति पुष्यति च स्वदेशनर्मदयोर्याम्योत्तरांतरे यावंति योजनानि तत्तुल्यव्यंगुलैः सा नार्मदी पलभा ४।४८ याम्यदेशे रहिता उ-

त्तरे सहिता। स्वदेशफलभा भवेदित्यर्थः । सा त्रिविधा दशनागदिग्भिर्हता अंत्या पुनः अंतिमा तु दहनहृत्रिशहृता चरखंडकानि स्युः। ॥ ८॥

लंकोदया भुजगभानि नवांकदस्रा
वन्हिद्विकृष्णगतयश्चरखंडकैः स्वैः॥
हीना विलोमविहिताःसहिता विलोमै-
र्व्यस्ताःपुनःस्वविषयोदयजा विनाड्यः९

अथोदयाःकृष्णगतयो वन्हयः शेषाः प्रसिद्धाः एते त्रयो लंकोदयाः स्युः।तैःस्वैश्चरखंडैः कैस्त्रिभिः क्रमेण हीनाः विलोमविहिता उत्क्रमस्थाः विलोमैश्चरखंडकैः क्रमेण सहिताः । एवं मेषादीनां षण्णां जाताः । ते पुनर्व्यस्ताःएवं द्वादश स्वदेशोदयजा विनाड्यःस्युः॥९॥

वेदात्यष्टिगुणाग्निधूर्जटिगजत्र्यत्य-
ष्टिदिग्विश्वभूमूर्छाभिर्धनुषो निहत्य
विभजेल्लग्नेऽष्टवारांस्त्रिभिः ॥ मीनादि
ष्वधनं तुलादिषु धनं लिप्तास्फुटो
भास्करः (?) ॥ १० ॥

अथ संक्रांतेरर्कज्ञानमाह । अत्याष्टिः सप्तदश धूर्जटयो रुद्राः मूर्छा एकविंशतिः अर्थाः पंच कामांकुशाः नखाः शेषा गुणा हराश्च प्रसिद्धाः । लग्नेष्टवारान् लग्न-

कालपर्यंतं संक्रांतिमारभ्येष्टदिवसान् धनुषः धनुः-संक्रांतिमारभ्य वेदादिभिर्द्वादशगुणकैर्यथाप्राप्तैः क्रमेण निहत्यातिथ्यादिभिर्द्वादशभिर्विभजेत् । फलं लिप्ताः मीनादिषु कन्यांतासु गतेऽर्के अधनं तुलादिकुंभांतेसधनं कृत्वा स्फुटो भास्करः स्यात् । एतदुक्तं भवति । संक्रमवशादर्कराशीन् ज्ञात्वा संक्रममारभ्य इष्टदिनपर्यंतं वेदादिदिवसास्तेतदधोंशाः स्युः । ते दिवसाः पृथक् धनुरारभ्य यथाक्रमप्राप्तेन गुणकेन संगुण्य यथा प्राप्तहरेण विभज्य कलादि यल्लब्धं तत्तस्मिन् रवौ मीनादिषु सप्तसु गते ऋणं तुलादिपंचसु गते धनं कार्यं स इष्टदिने स्फुटः सूर्यः स्यादिति ॥१०॥

रात्रौ भानुर्भार्धयुक्सायनांशस्तन्वकांशाः स्वोदयघ्नाः पृथक्त्वे ॥ त्रिंशद्भक्ता भुक्तभोग्याः पलादिस्ताद्दक्कालो मध्यगस्वोदयाढ्यः ॥ ११ ॥

अथ कालज्ञानं स्पष्टार्थम् ॥ ११ ॥

भोग्यं रवेः समयमिष्टघटीपलेभ्यस्त्यक्त्वोदयैः सह फलानि तदुद्धृतानि ॥ त्रिंशद्गुणान्यगलितोदयभाजि तानि भागाद्यजादिगृहशेखरितं तनुः स्यात् ॥ १२ ॥

अथेष्टकालाल्लग्नज्ञानमाह । रवेर्भोग्यकालमुदयैः सह इष्टघटीपलेभ्यस्त्यक्त्वा भोग्यं तदग्रोदयांश्च त्यक्त्वेत्यर्थः । तदुद्धृतानि तदुर्वरितानि यानि पलानि तानि त्रिंशद्गुणितानि अगलितोदयेन भाजितानि भागादि यल्लब्धं तदजादिगृहशेखरितं तनुर्लग्नं स्यात्। शेखरो मुकुटः शेखरो जातोऽस्मिंस्तच्छेखरितम् अजादिगृहैः शेखरितमजादिगृहशेखरितम् मूर्धनि मेषादिराशिसहितमित्यर्थः ॥ १२ ॥

नवांशमानं द्विशती कलानां सूर्यो-
नलग्नस्य शरेंदुभागे ॥ वारादिहोरा-
विगता शरघ्ने षड्वर्गचिंता तु विनाय-
नांशैः ॥ १३ ॥

अथ षड्वर्गहोरादिकमाह । कलानां द्विशती नवांशमानं स्यात् । इष्टांशात्पूर्वांशाद्विशतगुणा लग्नकलाः स्युरिति भावः । तस्मात् लग्नात् षड्वर्गचिंता अयनांशैर्विना स्यात्।षड्वर्गचिंतायामयनांशा न देया इत्यर्थः । षड्वर्गान्वक्ष्यति।अथ होरा।वारादीति । वारादेर्वारमारभ्य विगता होरा स्यात् । कस्मिन् सति सूर्योनलग्नस्य शरेंदुभागे शरघ्ने सति सूर्योनलग्नस्यांशानां पंचदशांशं शेषं विरहितं पंचघ्नं कृत्वा तं वारमारभ्य वारक्रमेण गणयित्वा गता होरा स्यात्तत्परस्य वर्तमाना स्यादित्यर्थः ॥ १३ ॥

अवंतिपूर्वापरयोजनानि स्वपादहीनानि ऋणानृणे स्तः ॥ पलानि देशांतरयोश्चरार्धं त्रिंशद्द्युमानांतरमर्धितःस्यात्॥ १४॥

अथ होरायाः प्रकारांतरार्थं देशांतरचरे आह। अवंतिरुज्जयिनी सा मध्यरेखोपलक्षणा तस्याः सकाशात्पूर्वापरे पूर्वे पश्चिमे वा स्वदेशपर्यंतं यानि योजनानि तानि स्वपादहीनानि स्वचतुर्थांशोनितानि देशांतरयोः पलानि स्युः। तानि क्रमेण ऋणानृणे स्तः। पूर्वेऋणसंज्ञानि पश्चिमेधनसंज्ञानीत्यर्थः। अथ चरार्धमिति। त्रिंशद्द्युमानांतरमर्धितं चरार्धं स्यात्। अर्थात्तद्घटिकात्मकमतः षष्टिगुणं पलानि स्युरिति। अथवारप्रवृत्तिमाह। नरार्धदेशोत्तरयुग्वियोगौ कार्यौ याम्यगोले योग उत्तरगोले वियोग इत्यर्थः। योगे जाते सति तत्तुल्यपदैःरव्युदयात्पुरा पूर्वं वियोगः पश्चादनंतरं दिनवारकर्त्तुः दिनाधीशस्य प्रवृत्तिः स्यात्। वारप्रवृत्तिरिति यावत्। इयं वारप्रवृत्तिः 'अर्कोदयादूर्ध्वमधश्च ताभिः 'इत्यादि। योगोल्वासनयासंहितावचनैश्च क्वचिद्विरुध्यते। अतोत्रेत्थं गतिश्चिंतनीया। ग्रंथकारस्तु अवंत्याः पश्चिमदेशे आसीत् अतस्तेन स्वदेशाभिप्रायेणेदमुक्तम्। तथाप्युत्तरगोले

देशांतरपलेभ्योल्पचरार्धे सति वियोगे पश्चादन्यथात्वं भवति । तत्र वियोगेपि पूर्वमितिद्रष्टव्यम्॥ एवं व्यभिचारः परिहर्तव्यः ॥ १४ ॥

द्विघ्नेष्टनाडीशरलब्धितो वा स्युः कालहोरादिनपप्रवेशात् ॥ प्राग्वच्छरघ्ना गणयेदनिंद्यात्क्रूरापि लग्ने शुभवेद वर्गे ॥ १५॥

अथ प्रकारांतरेण कालहोरामाह । दिनपप्रवेशात् द्विघ्नेष्टनाडीशरलब्धिताः कालहोराः स्युः । वारप्रवेशमारभ्य इष्टघटिका द्विघ्नाः शरभक्ताः लब्धं कालहोराः स्युरित्यर्थः । ताः शरघ्नाः प्राग्वद्गणयेत्। तद्यथा तत्प्रमाणं निरवयवं वारादितो गणयित्वागता कालहोरा स्यात्तत्परस्य वर्तमाना इत्यर्थः । एवंप्रकारद्वयेनापिक्रूरा पापहोरापि अनिंद्या अदुष्टा स्यात्। कस्मिन्सति लग्ने शुभवेदवर्गे सति शुभा वेदाश्चत्वारो वर्गा यस्मिंस्तत्तथा सौम्यवर्गाधिकत्वे सतीति भावः॥१५॥

राश्यंशाः शशिभूगुणेक्षणहतास्तिथ्यभ्रभूदिक्छरैर्भक्ता भार्धदृक्कणनंददिनकृद्भागा गृहं यस्य यत् ॥ त्रिंशांशः शनिसौम्यजीवरविजक्ष्मा

जन्मनां व्युत्क्रमादोजर्क्षेषु शरेषु सर्पमरुतः पंचेति षड्वर्गिका ॥ १६ ॥

अथ षड्वर्गानाह। राशेरंशाः राशिभुक्ताः भक्ताः। राशिभुक्ताः। भक्ताः राशीन्संत्यज्य अंशा ग्राह्या इत्यर्थः। ते चतुर्षु स्थानेषु क्रमेण शशिभूगुणेक्षण। १ १। ३। २। हतास्तिथ्यभ्रभूदिक्छरैः १५ । १०। १०। ५। भक्ताः अभ्रभुवो दशाशेषाः सिद्धाः। लब्धानि भार्धादयो वर्गाः स्युः। भार्धं होरा दृकाणो द्रेष्काणो नंददिनकृद्भागौ नवांशद्वादशांशौ एवं चत्वारो वर्गाः यस्य ग्रहस्य यद्गृहं तत्तस्यैव अयमेको गृहाख्यः। अथ त्रिंशांशा इंति समराशौ सितादीनां पंचादयस्त्रिंशांशाः स्युः। त्रिंशतः पूरणास्त्रिंशाः ते च ते अंशाश्च त्रिंशांशाः। तद्यथा। समराशौ आद्याः पंचभागाः शुक्रस्य ततः सप्त बुधस्येत्यादि। ओजर्क्षेषु विषमराशिषु व्युत्क्रमात् भागानामधिपतीनां च। तद्यथा आद्याः पंच भौमस्य ततःपंच शनेरित्यादि। इतीयं षड्वर्गिका स्यात्। षण्णां वर्गाणां समाहारः षड्वर्गी सैव षड्वर्गिका॥ १६ ॥

महोदये सायनसूर्यभोग्यं सषड्भुक्तं च युतं द्युमानम् ॥ इति स्मृतेयं शिशुबोधनाय श्रीकेशवार्केण विलग्नशुद्धिः ॥ १७ ॥

## इति विवाहवृंदावने लग्नशुद्धिः सप्तदशोऽध्यायः ॥ १७ ॥

अथ ग्रहगणितोक्तमपि द्युमानानयनं सुगमोक्त्या सायनसूर्यस्य यत्प्राग्यद्भोग्यं सायनसूर्यस्य सषड्भस्य यच्च भुक्तं तत् मध्योदये तदंतर्वर्तिषु मध्योदयेषु युक्तं द्युमानं स्यात्।अथालंकारः । इतीयं विलग्नस्य विवाहलग्नस्य शुद्धिः शिशुबोधनाय बालावबोधाय श्रीकेशवार्केण स्मृता संक्षिप्य कथिता ॥ १७ ॥

इति श्रीसकलागमाचार्यवर्यश्रीकेशवसांवत्सरात्मजगणेशविरचिता केशवार्कोदितलग्नशुद्धेर्विवृतिः समाप्ता ।

## समाप्तं विवाहवृन्दावनम् ।

---

पुस्तक मिलनेका ठिकाना—

ज्येष्ठाराम मुकुन्दजी, कालकादेवीरोड–मुंबई

मिहिरचन्द लक्ष्मणदास, संस्कृतपुस्तकालय–लाहौर.



